किंचिद्विनष्टमद्यापि विद्यते नैव नन्दिनि ! ।
अर्वागग्निभ्रमचतुष्टयादन्यो वरो भवेत् ॥१९४॥
अम्बामूचे सुता मातर्मा विषीद मुदं कुरु ।
यत्सुता स्यादात्मपुण्या पितृपुण्या कदापि न ॥१९५॥
मातस्तातस्य दोषोऽयं न कोऽप्यत्र हि विद्यते ।
मम पूर्वभवोपात्तकर्मविस्फूर्जितं त्विदम् ॥१९६॥
भुञ्जानः स्वार्जितं सर्वो धत्ते मुदमनुत्तराम् ।
परेणोपार्जितं कोऽपि संप्राप्नोति न बह्वपि ॥१९७॥
नृपोऽप्येकाग्रहां पुत्रीं तेन तां पर्यणाययत् ।
साऽपि तं दैवतमिव निजं पतिममन्यत ॥१९८॥
हठात्तन्मातरं राजा तत्स्थानान्निरवा[स]यत् ।
तनयां कुष्ठीने चापि प्रैषीत्पुरबहिर्नरैः ॥१९९॥
विलुठन् निःश्वसन् कुष्ठी तत्रातिष्ठत् स कष्टितः ।
शुश्रूषमाणा साप्यस्य पादौ पत्युः पतिव्रता ॥२००॥
स तदाकूतकुतुकी निःश्वस्य स्खलिताक्षरम् ।
मन्दस्वरं निजगाद निशीथे नृपनन्दिनीम् ॥२०१॥
निर्भाग्यस्य कुष्ठिनो मे सुभगे ! भाग्यशालिनि ।
संवाहयसि किं पादौ न किं श्रुतमिदं त्वया ॥ यत उक्तम्–
"राजदण्डो ज्वरः कुष्ठपीनसं नयनामयम् ।
पञ्चैते व्याधयो राजन् ! संक्रामन्ति नरान्नरम्" ॥२०३॥
रूपं जितोर्वशीरूपं तव मत्सङ्गदोषतः ।
क्षीरवत्काञ्जिकात्सद्यो विनङ्क्ष्यति हहा मुधा ॥२०४॥
किञ्चिद्विनष्टमद्यापि विद्यते न हि सुन्दरि ! ।
तन्मातुलगृहं गच्छ किं वाऽन्यं कुरु वल्लभम् ॥२०५॥
राजपुत्री पतिं प्रोचे मा मा वोचः प्रियेदृशम् ।
पितृदत्तः कुलस्त्रीणामेक एष यतः पतिः ॥२०६॥

कुलस्त्रियोऽपि यद्यन्यं करिष्यन्ति पतिं पुनः ।
तासां पण्याङ्गनानां च भविष्यति किमन्तरम् ॥२०७॥
तत् त्वमेव तातदत्तः पतिर्मे जीविताववधि ।
यतो राज्ञां सतां चोक्तं कन्यादानं सकृद्भवेत् ॥२०८॥
कुष्ठी हृष्टमनाः प्राह सत्यमेव त्वयोदितम् ।
साहश्ये किन्तु दम्पत्योः सङ्गतं स्यादिदं वचः ॥२०९॥
"गते मृते प्रव्रजिते क्लीबे च पतिते पतौ ।
पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते" ॥२१०॥
इति पूर्वकविप्रोक्तप्रामाण्यादपरं पतिम् ।
कुर्वतीनमे(नाम)पि स्त्रीणां न स्यादण्वपि दूषणम् ॥२११॥
गलत्कुष्ठाभिभूतोऽहं जीविष्यामि दिनत्रयम् ।
अलक्षितैव तद्गच्छ रात्रावेव यथारुचि ॥२१२॥
लगित्वा पादयोः साऽपि जगदे गद्गदस्वरम् ।
न वाच्यमीदृशं वाक्यं हास्येनापि पुनः प्रिय ! ॥२१३॥
त्वं देवस्त्वं गुरुस्त्वं च नाथस्त्वं जीवितं तथा ।
मनो-वचन-कायैस्त्वदन्यो नैव धवो मम ॥२१४॥
एवं तन्निश्चयं ज्ञात्वा खेचरो मुदिताशयः ।
निजरूपविकीर्विद्यां स्मृतवान् रूपकारिणीम् ॥२१५॥
यथाऽभ्रपटलात्पूषा भूमिकाया नटो यथा ।
कुष्ठित्वान्निर्गतो जज्ञे तथा सोऽपि स्वरूपभाक् ॥२१६॥
संचलत्कुण्डलः स्वर्ण-मणि-मौक्तिकभूषणः ।
अमर्त्य इव शर्वर्यामपि विद्योतमादधे ॥२१७॥
तमुदीक्ष्य यथाऽवस्थं विस्मयेन भयेन च ।
संकीर्णरसमापन्ना प्रोचे विद्याधरेण सा ॥२१८॥
कान्ते ! मा स्म मनोऽक्रान्तं कार्षीरस्मि तव प्रियः ।
स एव खेचरीभूतो मन्यस्वेदमसंशयम् ॥२१९॥

खेचरोऽयं हेमरथो भोगाः सर्वत्र भोगिनाम् ।
इत्यर्थं संशयं कुर्वन् कुष्ठी भूत्वा समागमम् ॥२२०॥
सा सानन्दाऽभवत् कान्तं कान्तरूपं निरीक्ष्य तम् ।
कुमुद्वतीव कौमुद्या शशिनं शुद्धदीधितिम् ॥२२१॥
समग्रं सपरीवारं स प्रज्ञप्तिविद्यया ।
शीघ्रमाकारयामास तत्क्षणादाययौ च सः ॥२२२॥
सर्वरत्नमयस्तम्भसहस्रस्थिरसंस्थितम् ।
चञ्चत्पञ्चालिकारूपवीक्षाऽऽक्षिप्तमनोजनम् ॥२२३॥
यद् दूरादागतमिव विश्रामार्थमिह स्थितम् ।
पपौ गवाक्षैर्विततैर्वायुं व्यात्तैरिवाननैः ॥२२४॥
उद्यद्रत्नप्रभावीचिव्याप्तभूजलधौ स्थितम् ।
सपताकं यानमिवारु(रो)चयत् कल्पतनागरम् ॥२२५॥
यस्योपरि रत्नमया शुशुभे कलशावलिः ।
सूर्यालीवागमद् द्रष्टुं विधातुं स्वौक ईदृशम् ॥२२६॥
तमी(दी)दृशं स्वर्विमानसमानं सप्तभूमिकम् ।
भुवनं विद्यया विद्याधरो विद्याकरोऽकरोत् ॥२२७॥
[पञ्चभिः कुलकम्]

तथाऽवरोधसौधानि शालाश्च गजवाजिनाम् ।
सभामण्डप-हट्टानि सर्वमित्यादि स व्यधात् ॥२२८॥
ततः प्रातर्बहिः पौरा गता वीक्ष्य तदीदृशम् ।
किमिदं नगरं त(क)स्मादागतं ते व्यचिन्तयन् ॥२२९॥
व्यजिज्ञपन्नमी राज्ञे सोऽपि भीतोऽथ वन्दिनः ।
प्रजिघाय परिज्ञातुं तमाकस्मिकमागतम् ॥२३०॥
ज्ञात्वा तेऽपि समेत्याशु कथयन्ति स्म भूपतेः ।
विद्याधरो हेमरथो द्रष्टुं त्वामस्त्युपागतः ॥२३१॥
ततः समग्रसामग्र्या मिलनायास्य पार्थिवः ।

ययौ तत्र च यत्रास्ति खेचरो नगराद् वहिः ॥२३२॥
विद्याधरपरीवारं दिव्याम्वरविभूषणम् ।
विलोक्य विस्मितो राजा नाकः किं भुवमागतः ॥२३३॥
मन्दुरा हस्तिशाला च(वा)पूर्णा वाजि-मतङ्गजैः ।
पश्यन्नास्यत् तदा सद्यो निजैश्वर्यमदं नृपः ॥२३४॥
अथोत्तीर्य गजाद्राजा सौधान्तः प्रविवेश सः ।
जलकान्ततले वारिभ्रान्त्योर्ध्वं वस्त्रमाददे ॥२३५॥
वेत्री प्राह हसित्वा तं नेदं जलमियं मही ।
कोऽयं ते भ्रमो भूप ! किं गृहोर्व्यां जलं भवेत् ॥२३६॥
ततो विलक्षोऽग्रे गच्छन् क्वचिद्रत्नमयोतुना ।
जीवतेव पुरो याता दुःशकुन इति स्थितः ॥२३७॥
विलम्ब्याथ पुरो गच्छन् सोऽपश्यत् शालभञ्जिकाः ।
कुर्वतीः सर्वकार्याणि सजीवा इव सर्वतः ॥२३८॥
सचित्राणि विचित्राणि पश्यन्नेवंविधान्यथ ।
आरुरोह नृपः सौधे सप्तमीं भूमिमद्भुताम् ॥२३९॥
तत्र सिंहासनासीनो विद्याधरशिरोमणिः ।
वीक्ष्य क्षितिपमायान्तमभ्युत्तस्थौ स सादरः ॥२४०॥
प्रणम्य भूपतिं सद्यः स्वासने संनि(न्य)वेशयत् ।
कान्ताऽऽहूताऽथ सा तत्र प्राप्ता मदनमञ्जरी ॥२४१॥
सा प्रणम्य पितुः पादौ प्राञ्जलिः पुरतः स्थिता ।
सोऽपि स्वपुत्रीं विज्ञाय विखिन्नात्मा वि(व्य)चिन्तयत् ॥२४२॥
मा विधेहि विधे ! जातु वंशे कस्यापि नन्दिनी ।
घुणावलीव या जन्मस्थानं दूषयति क्षणात् ॥२४३॥
चपलेव चला नारी नदीवन्नीचगामिनी ।
क्षणरागा च सन्ध्येव ततोऽसौ कुलदूषिका ॥२४४॥
प्रत्यक्षा विदधे शास्त्री स्त्री दैवे[न] नाशकारिणी ।

कण्ठलग्ना तदाऽऽधत्ते गतप्राणं नरं क्षणात् ॥२४५॥
समेयं तनया जज्ञे निश्चितं कुलपांसुना(ला) ।
परिणीतं वरं मुक्त्वा याऽन्यमेतं समाश्रिता ॥२४६॥
इति चिन्तावशापन्नविषादमनसं नृपम् ।
वीक्ष्य विद्याधरः प्राह संशयं कुरु मा मुधा ॥२४७॥
सोऽहं कुष्ठी वरो योऽस्याः कोपतः परिणायितः ।
सेयं तव सुता सत्या संजाता भाग्यसम्पदा ॥२४८॥
सर्वत्र भोगिनां भोगा इति पूर्वमुभाषितम् ।
परीक्षयि(रीक्षि)तुमियं माया प्रयुक्ताऽऽसीन्मया नृप ! ॥२४९॥
तदस्या लाभतो भूप ! सत्यीभूतमिदं वचः ।
तदेतदुक्तं मन्यस्व वचनं सुप्रतिष्ठितम् ॥२५०॥
एवमुक्ते खेचरेण स नरेश्वरखेचरः ।
उल्लसत्पुलको हर्षादूचे मदनमञ्जरीम् ॥२५१॥
तनये ! विनये मुग्धे विधेहि निजमानसम् ।
सानुकम्पं सप्रसादमप्रसादकरे मयि ॥२५२॥
सोचे शुचिसमाचारा किमिदं पितरुच्यते ।
ददता वरमीदृक्षं प्रसादोऽयं कृतस्त्वया ॥२५३॥
उपकारशतैर्यस्यापत्यं जायेत नानृणम् ।
तातस्योपरि कस्तस्य विदधाति सुधीः क्रुधम् ॥२५४॥
हृष्टः प्राह नृपः पुत्रि ! कुलीनाऽसि वदस्यतः ।
प्रियमेव कटुः किं स्याच्चूर्णिताऽपि हि शर्करा ॥२५५॥
तनयेऽस्मि कृतज्ञानां कुलीनानां भवत्यपि ।
लेभे रेखामाशशाङ्कसहस्रकिरणोदयम् ॥२५६॥
ततो हेमरथो विद्याधरो धृत्वा नृपं करे ।
सम्बोध्य तौ पूर्वमिव मिथः प्रीतिमवर्धयत् ॥२५७॥
अभ्यर्थ्य भूपतिर्जामातरं सत्वरमानयत् ।

स्वसौधे मिलनायास्या जनन्या हर्षहेतवे ॥२५८॥
रसवत्या सुरसया तद्विज्ञैः कृतयाऽऽदरात् ।
भोजयामास तं राजा खेचरं सपरिच्छदम् ॥२५९॥
स भोज्यैर्विविधैर्वस्त्रैर्भूषणैश्चापि भूपतिः ।
संमदात् सपरीवारं जामातरमपूपुजत् ॥२६०॥
निवेश्य तनयामङ्के दिव्यवस्त्रविभूषणैः ।
अमानयन्माननीयां प्रियालापैश्च सुन्दरैः ॥२६१॥
अथो हेमरथो भूपमनुज्ञाप्य प्रियायुतः ।
आरुह्य सपरीवारो विमानानि खमुद्ययौ ॥२६२॥
क्षणेन स्वपुरं प्राप्य विवेश समहोत्सवम् ।
विद्याधराधिपत्यं स चिरकालमपालयत् ॥२६३॥
अथान्यदोद्यानपालो भूमिपालं व्यजिज्ञपत् ।
देवाद्य सुव्रताचार्यो वहिरस्ति समागतः ॥२६४॥
ज्ञानेन सातिशयेन तत्रस्थसर्वदेहिनाम् ।
छिन्दानः संशयानस्ति सोऽतीतानागतानपि ॥२६५॥
तदागमश्रुतेरब्दगार्जि (जें) रिव महीपतिः ।
शिखण्डीव मुदापूर्णस्तूर्णमासीत् सुपत्त्रयुक् ।२६६॥
स्कन्धावारैरपारैः स वेष्टितः शिष्टचेष्टितः ।
वन्दनाय समादाय प्रियां सह ययौ नृपः ॥२६७॥
विमुच्य चामर–छत्र–मुकुटो–पानहादिकम् ।
राजचिह्नं महीपालः सूरीणां पुरतोऽगमत् ॥२६८॥
वन्दनं द्वादशावर्तं भवावर्तविमुक्तये ।
स ददौ परया भक्त्या साधूनन्यान् ननाम च ॥२६९॥
सूरयोऽथ निषण्णायां राजप्रमुखपर्षदि ।
कर्तुमारेभिरेऽधर्मनाशिनीं धर्मदेशनाम् ॥२७०॥
भो ! भो ! अपारसंसारसङ्गिनामङ्गिनामयम् ।

चुल्लकादिभिराख्यानैर्दुर्लभो मानुषो भवः ॥२७१॥
मानुषोऽपि(षेऽपि) रसा-स्थि-त्वग्-मेदो-मज्जा-ऽस्र-वर्च्चसा(साम्)
पात्रं गात्रं कृतघ्नं च स्यादसारमशाश्वतम् ॥२७२॥
पयसा पोषितादस्माद् देहाद् रम्भातरोरिव ।
सारमेकमुपादेयं तद्धर्मासेवनं फलम् ॥२७३॥
धर्मादेव यतः सर्वे संपद्यन्ते समीहिताः ।
अर्था इह मनुष्याणामैहिकाः पारलौकिकाः ॥२७४॥
स्ववधूकृतसङ्गीतप्रीतचित्ताः सदा सुराः ।
चिन्तासम्पन्नकार्याश्च जायन्ते धर्मतो ध्रुवम् ॥२७५॥
षट्खण्डभरतक्षेत्रनाथा नव निधीश्वराः ।
धर्मादेव प्रजायन्ते सर्वेऽमी चक्रवर्तिनः ॥२७६॥
चतुस्त्रिंश[द]तिशयभ्राजिनोऽमी जिना अपि ।
भवन्ति धर्मतो नूनं त्रिजगज्जनपूजिताः ॥२७७॥
तथाऽन्यदपि सौभाग्य-रूप-वीर्यादिकं च यत् ।
चित्ताह्लादकरं विश्वे विद्यते धर्मतो हि तत् ॥२७८॥
अनन्तं शाश्वतं यच्चानाबाधमतुलं सुखम् ।
सिद्धिसंबन्धि तज्जीवो धर्मादेव समाप्नुयात् ॥२७९॥
विज्ञाय तमिमं धर्मप्रभावं भावसंयुताः ।
धर्म एव सदा यूयं भव्या भवन्तु सादराः ॥२८०॥
धर्मानुभावमाकर्ण्य नत्वा हेमरथो गुरुम् ।
अवादीद् भगवन् ! पूर्वं किं मया सुकृतं कृतम् ॥२८१॥
गुरुराह महाबाहो ! शृणु पूर्वभवं निजम् ।
यं विबुध्य विशुद्धात्मा भविष्यति भवानपि ॥२८२॥
कूर्मग्रामेऽभवद् भद्रप्रकृतिः कुलपुत्रकः ।

राज्ञः पूर्वभवीयधनदेवकथा ।

धनदेवाभिधस्तस्य वल्लभाऽस्ति यशोमती ॥२८३॥

स कुसंसर्गतो जातपापर्द्धिव्यसनः सदा ।
मांसलुब्धो लुब्धकेषु मिलितो हन्ति देहिनः ॥२८४॥
अन्यदाऽवाप पापर्द्धिं विधातुं स वनान्तरम् ।
नश्यतो हन्तुमारेभे प्राणिनो नेत्रगोचरान् ॥२८५॥
धावतोऽनुदधावेऽथ चलतोऽन्वचलच्च सः ।
स्वहतान् क्रन्दतः सत्त्वान् वीक्ष्याधिकमुदं दधौ ॥२८६॥
मृगमेकमनु त्रस्तं धावन्नथ शरासने ।
शरं संयोज्य चिक्षेप तं हन्तुं निष्कृपाशयः ॥२८७॥
कुरङ्गोऽथ लतागुल्मं प्रविश्य परतो गतः ।
स हतो न हतो वेति वीक्षितुं पृष्ठतोऽगमत् ॥२८८॥
प्रविवेश लतागुल्मे यावत् तावत् पुरःस्थितम् ।
मुनिमेकमपश्यच्च तत्पुरः पतितं शरम् ॥२८९॥
धनदेवस्ततो भीतः पतित्वा मुनिपादयोः ।
आह स्तोकेन न विभो ! लिप्तोऽहं त(त्व)द्वधैनसा ॥२९०॥
तत्प्रसीद न विज्ञातस्तिष्ठन्निह भवान् प्रभो ! ।
क्षिप्तः शरो मृगं हन्तुं पृष्ठतो धावता मया ॥२९१॥
ध्यानविन्यस्तचित्तेऽस्मिन् न ददत्युत्तरं मुनौ ।
धनदेवोऽतिभीमग्नो लग्नोऽस्य पादयोः पुनः ॥२९२॥
भगवन् ! भवतां लोकोत्तरतेजस्विनां पुरः ।
देवा अपि तृणमात्रं किं पुनर्मादृशो जनः ॥२९३॥
न भ्राता न पिता पुत्रो न स्वामी कोऽपि विद्यते ।
अटव्योतोः श्रुतिच्छेदस्तदयं मारणे मम ॥२९४॥
तद् विमुञ्च मयि क्रोधं रोधं दत्से यदङ्गिनाम् ।
तत् प्रसद्य पृष्ठहस्तं यच्छ स्वच्छमना भव ॥२९५॥
पारयित्वा मुनिर्ध्यानं धनदेवमुवाच तम् ।
भो ! प्रकृत्या जितक्रोधयोधाः स्युः साधवः सदा ॥२९६॥

साधवः सापराधेऽपि न कुर्वन्ति क्रुधं क्वचित् ।
कः कोपस्यावकाशो हि त्वयि भद्र ! निरागसि ॥२९७॥
अपराधं विधायापि यो जन्तुः परितप्यते ।
सोऽपि कोपपदं न स्यान्निर्मन्तुः किं पुनर्भवान् ॥२९८॥
तद् विमुच्य भयं भद्र ! स्वस्थीभूय मयोदितम् ।
आकर्णय यतो दुःखी न भवेस्त्वं भवान्तरे ॥२९९॥
यथा महाभयं भद्र ! विद्यते मृत्युतस्तव ।
परेषामपि जानीहि तादृगेव तथाऽङ्गिनाम् ॥३००॥
उच्यमानो म्रियस्वेति जायते दुःखितो यदि ।
जन्तुस्तन्निशितैः शस्त्रैर्हन्यमानः कथं भवेत् ॥३०१॥
कुष्ठी कुष्ठाभिभूतोऽपि न मर्तुमभिवाञ्छति ।
किं पुनर्यः सुखी तस्मान्मृत्युभीरुभयोः समा ॥३०२॥
तथा विद्युच्चले भोगसंयोगे जीविते पुनः ।
गजकर्णचले युक्ता न पापाभिरतिर्नृणाम् ॥३०३॥
नान्यजीववधात् पापस्त(पमू)लं किञ्चन विद्यते ।
प्रभवन्ति यतो दुःखलक्षाण्याशु भवान्तरे ॥३०४॥
पापं स्त्री-पुत्र-पत्नीनां कृते येषां करोति ना ।
ते रक्षन्ति न तं यान्तं नरके विवशं पुनः ॥३०५॥
तथाऽन्ये स्वजना दूरे सन्तु योऽस्ति सुपोषितः ।
देहो विघटते सोऽपि कुभृत्य इव संगरे ॥३०६॥
तत् कुरुष्व मतिं धर्मे शर्मकारिणि शाश्वते ।
न भवन्ति यतो दुःखान्यैहिकामुष्मिकान्यपि ॥३०७॥
तं पीयूषोपमं सोऽपि पीत्वा मुनिमुखोद्गतम् ।
उपदेशरसं सद्यो मिथ्यात्वा(त्व)गरमत्यजत् ॥३०८॥
धनदेवोऽपि मुनिपादौ नत्वा व्यज्ञपयत् प्रभो ! ।
भवान्धकूपे पततो मम हस्तोऽवलम्बितः ॥३०९॥

अद्यप्रभृति जीवानां विधास्यामि वधं न हि ।
खादिष्यामि न मांसं च नियमोऽस्तु सदा मम ॥३१०॥
मुनिरप्याह न त्वत्तः पुण्यवानस्ति कश्चन ।
यः समस्तं सदाऽभ्यस्तं पापं तत्याज तत्क्षणात् ॥३११॥
तदेकचित्तः स्वोपात्तं नियमं जीवितावधि ।
पालय तां(तं) भवेद्यस्मान्निश्चयफलदायिकः(दायकः) ॥३१२॥
स प्राह सुप्रभो ! प्राप्तं परित्यजति को निधिम् ।
गतं चक्षुरवाप्तं चेत् विक्षिपेत् कः शलाकया ॥३१३॥
नियमं पालयिष्यामि प्रयत्नो जीवितावधि ।
को हि कल्पद्रुमे लब्धे नादरं कुरुते सुधीः ॥३१४॥
प्रणिपत्य मुनेः पादौ भङ्क्त्वा चाप-शरादिकम् ।
मृगयोपस्करं सर्वं जगाम गृहमात्मनः ॥३१५॥
दृष्ट्वा तमागतं कान्तं निर्मांसं निर्धनुःशरम् ।
प्रिया पप्रच्छ किं किंचित् त्वत्पार्श्वे नाद्य वीक्ष्यते ॥३१६॥
अथाचख्यौ स वृत्तान्तमखिलं दयिताग्रतः ।
साप्याह कान्त ! धन्यस्त्वं यस्याभून्मुनिसंगमः ॥३१७॥
नियमो विदधे यश्च सोऽत्यन्तं मेऽपि संमतः ।
तदमुं पालयिष्यामो मिलित्वा द्वावपि प्रिय ! ॥३१८॥
ततस्तयोः पालयतोर्नियमं मुदितात्मनोः ।
कालः कियान् व्यतीयाय शुद्धद्रव्यार्जनाजुषोः ॥३१९॥
दुर्भिक्षमापतद् रक्ष इव लोकक्षयंकरम् ।
कदाचन जनो यत्र न कोऽपि सुखितोऽभवत् ॥३२०॥
जनन्योऽपि निजं पुत्रं यत्रास्तसु(त्रात्तसु)पयाचितैः ।
वञ्चयित्वा रहः स्थित्वा कदन्नमपि भुञ्जते ॥३२१॥
जनका अपि यत्र स्वं मूल्यमादाय नन्दनम् ।
विक्रीणन्ति तृणमिव संत्यक्तप्रीतिरीतयः ॥३२२॥

क्षुधार्त्ता पतिता यत्र दृश्यन्ते द्रमकाः क्षितौ ।
दुर्वाताद् गलितानीव पापवृक्षफलान्यधः ॥३२३॥
यत्र प्रतिगृहं द्वारसंस्थिता द्रमकावलिः ।
विहितार्त्तस्वरा दीनाऽऽख्यातीव निजदुष्कृतम् ॥
तस्मिन्नेवंविधे जाते दुर्भिक्षे क्षयकारिणि ।
अन्नाभावे जनः प्रायो बहुर्मृत्युमुपागतः ॥३२५॥
योऽप्यस्ति सोऽप्यभून्मांसभक्षणाभिरतो जनः ।
विमुच्य कोऽपि तं ग्रामं क्रमशोऽगच्छदन्यतः ॥३२६॥
धनदेवः सभार्योऽपि सीदन्नन्नक्षयेण तु ।
चचाल सह सार्थेन स(आ)सन्नविषयोपरि ॥३२७॥
सार्थलोकोऽपि मांसेन प्राणवृत्तिमकल्पयत् ।
गच्छतः स्म निराहारौ तावन्नाभावतः पथि ॥३२८॥
अथान्नालाभतस्तौ तु पथि चंक्रमणाक्षमौ ।
मिथः पर्यालोचयतामिदं मृत्युभयातुरौ ॥३२९॥
दूरेऽन्नबहुलो देशो द्वावप्यग्रे गमाक्षमौ ।
नियमः पालनीयश्च यावज्जीवमयं पुनः ॥३३०॥
तद् बलान्मृत्युरायातः स स्वयं यदि साध्यते ।
सकामनिर्जरायोगात् तदा स्यान्निर्मलो भवः ॥३३१॥
तौ विचिन्त्येति चक्रातेऽनशनं शुद्धमानसौ ।
विपद्य च स्वर्गलोकं प्रथमं समुपेयतुः ॥३३२॥
यद्युवाभ्यां पूर्वभवे हिंसा-मांसनिवृत्तितः ।
नियमः पालितस्तेन सम्पन्ना सम्पदीदृशी ॥३३३॥
ततश्च्युत्वा भवान् विद्याधरो मेघरथोऽभवत् ।
यशोमती पुनरीयं जाता मदनमञ्जरी ॥३३४॥
तदाकर्ण्याथ तावीहापोहसंहतमानसौ ।
संजातजातिस्मरणौ दम्पती मुनिमूचतुः ॥३३५॥

आदिष्टं प्रभुणा यन्नौ वृत्तं वृत्तं पुरातनम् ।
तत् पुरःस्थमिवाध्यक्षं जातं जातिस्मृतेः समम् ॥३३६॥
तत्प्रसीद गृहस्थानामुचितं धर्ममादिश ।
न वयं दुष्करस्यास्य व्रतस्य करणे क्षमाः ॥३३७॥
मुनिः सम्यक्त्वमूलानि द्वादशापि व्रतान्यथ ।
सम्यगुच्चारयामास दम्पती विनयान्वितौ ॥३३८॥
प्रपद्य तौ जैनधर्मं वन्दित्वा मुनिपुङ्गवम् ।
पुरं विविशतुः स्वीयं मुनिरप्यन्यतो ययौ ॥३३९॥
प्रतिपाल्य विशुद्धं तौ गृहिधर्ममनाकुलौ ।
पर्यन्तसमये प्रायोपवेशनमगृह्णताम् ॥३४०॥
निरतीचारमाराध्य स्वर्गं तौ जग्मतुस्ततः ।
[1]च्युत्वा महाविदेहेषु मानवीभूय सेत्स्यतः ॥३४१॥

[इति धनदेवदृष्टान्तः]

तदेवं देव! यः कोऽपि धनदेव इवाङ्गिनाम् ।
न करोति वधं मांसं न खादति स पुण्यवान् ॥३४२॥
आकर्ण्यैवं जैत्रसिंहो भूपतिर्विसटं जगौ ।
श्रेष्ठिन्! शक्तः परित्यक्तुं न मांसमहमन्वहम् ॥३४३॥
न स्वयं देहिनां घातं करिष्यामि निरागसाम् ।
मासे मांसं पञ्चदश त्यक्ष्यामि दिवसान् पुनः ॥३४४॥
श्रेष्ठी प्राह प्रभो! धन्यस्त्वमेव यदियत्यपि ।
श्रुते सकृज्जीववधं परितत्याज यः स्वयम् ॥३४५॥
तदेव सत्यवचसा भवता निजभाषितम् ।
परिपाल्यं यतो धर्मः सतां सत्यव्रतं(तः) सदा ॥३४६॥
जैत्रसिंहो जगौ श्रेष्ठिन्नुपरोधः किमत्र ते ।
बुभुक्षितस्य किं नाम भोजनाभ्यर्थना भवेत् ॥३४७॥
भूपः प्रोचे पुरा मान्यस्त्वमभ्यागत इत्यभूः ।

धर्मोपदेशादधुना जातः पूज्यतमो मम ॥३४८॥
तदत्र तिष्ठ मद्दत्तावासे पौरशिरोमणिः ।
कृतो मया पुनर्नित्यमागच्छेरस्मदन्तिकम् ॥३४९॥
संघस्य रथयात्रायामादेशं वेत्रिणा ददौ ।
सर्वत्र नगरेऽमारिघोषणां चाप्यकारयत् ॥३५०॥
वेसटाय वरावासादेशं मन्त्रिपुरो ददौ ।
स गत्वा श्रेष्ठिना सार्धं नृपादेशं तथाऽकरोत् ॥३५१॥
वहिस्तः स समादाय श्रेष्ठ्यपि स्वकुटुम्बकम् ।
तस्थौ तस्मिन् भूपदत्तावासे वासववेश्मभे ॥३५२॥
यातायातैः प्रियालापैः श्रेष्ठिनोऽस्य च भूपतेः ।
निचिता प्रीतिरुत्पेदे बल-केशवयोरिव ॥३५३॥
राजप्रसादमप्याप्य परुषं न वचोऽवदत् ।
चन्द्रकान्तो न पीयूषं विमुच्य परिवर्षति ॥३५४॥
मन्यमानः स भूपेन लोकोपकृतिमातनोत् ।
विन्यस्तः सर(शिर)सीशेन सदोपकुरुते शशी ॥३५५॥

कुर्वन् सदा सकलपौरशिरोमणित्वं
दानेन निर्जरतरोः समतां दधानः ।
संपूरयन् निजयशोलसितैः स विश्वं
तद् वेसटः पुरवरं चिरमध्युवास ॥३५६॥

*2* इति श्रीशत्रुञ्जयमहातीर्थोद्धारप्रबन्धे प्रथमः प्रस्ताव. ।



# अथ द्वितीयः प्रस्तावः ।



वासमासेदुषस्तस्य धर्मकर्मजुषस्तथा ।
प्रसिद्धिरासीत् स यथा ह्युपमानमभूत् सताम् ॥१॥
अस्याभूद् वरदेवाह्वो वरदेव इवात्मजः ।
चित्रं यः सुमनास्त्वपि न सुरालयसंस्थितिः ॥२॥
क्रमेण वेसटः सूनुं नियोज्य गृहसम्पदि ।
स्वयं गृहीत्वाऽनशनं शुभध्यानो दिवं ययौ ॥३॥
पितेव वरदेवोऽपि पालयन् पौरमुख्यताम् ।
लोकोपकारं कुर्वाणः ख्यातोऽभूत् क्षितिमण्डले ॥४॥
क्रमेण तस्य पुत्रोऽपि जिनदेवाह्वयोऽभवत् ।
जिनदेवपदद्वन्द्वसमाराधनबद्धधीः ॥५॥
पिताऽपि तस्मिन् संयोज्य गृहभारमपारधीः ।
स्वयं स्वर्गमगाद् ग्रामं ग्रामादिव पथि स्थितः ॥६॥
जिनदेवः सदा देवपूजादिकरणोद्यतः ।
कालं निनाय सोऽपायरहितं महितः सताम् ॥७॥
तस्याथ समये सूनुरनूनगुणसेवधिः ।
बभूव भूधवश्रेणिमान्यो नागेन्द्रनामकः ॥८॥
यः शेष इव सत्याह्वो गोत्रोद्धारकरत्वतः ।
किन्तु तस्य द्विजिह्वत्वं नासीच्च कुटिला गतिः ॥९॥
तस्मिन्नात्तभरे पुत्रे जिनदेवः कदाचन ।
निशाशेषे मुक्तनिद्रो निस्तन्द्रः समचिन्तयत् ॥१०॥
विश्वास्मिन्नपि विश्वेऽत्र वस्तूनि सकलान्यपि ।
क्षणिकानि निरीक्ष्यन्ते प्रत्यक्षं स्वयमंगिभिः ॥११॥
तथाऽपि निबिडप्रीतियन्त्रिता वपुरादिषु ।
न कुर्वन्ति हितं धर्मं दत्तं येन धनादिकम् ॥१२॥

तथा मोहग्रहावेशविवशा गृहवासिनः ।
विडम्ब्यमानं स्वं तेन वराका नैव जानते ॥१३॥
तथाऽत्र नारी वारीव वशां नरगजं क्षणात् ।
कुरुतेऽतः समर्थोऽपि लभते न समीहितम् ॥१४॥
अपत्यनिगडं दैवो वितीर्य पदयोर्मम ।
तथाऽकरोद् यथा मुक्तिर्दुर्लभा खलु मी(वी)क्ष्यते ॥१५॥
तदहं प्रत्यहं शृण्वन्नपि जैनवचा(चः)सुधा[ म् ] ।
निनाय यौवनं कामग्रहग्रहिलमानसः ॥१६॥
तारुण्यं निर्गतं देहं जरयोद्धरयाऽऽवृतम् ।
तदीक्षायोग्यता नास्ति शक्तिहीनस्य मेऽधुना ॥१७॥
मदादेशवशः सूनुरात्तवेश्मभरोऽस्ति यत् ।
तद् व्ययित्वा धनं धर्मे श्रयेऽर्थं पारलौकिकम् ॥१८॥
तदाकार्य गुरून् तेषां प्रत्यक्षं देववेश्मनि ।
अष्टाह्निकाः कारयामि महोत्सवपुरस्सरम् ॥१९॥
साधर्मिकाणां वात्सल्यं सत्रागारमवारितम् ।
कारयामि यथोपात्तं वित्तं स्यात् सफलं मम ॥२०॥
विचिन्त्येति प्रगे पुत्रमाकार्यार्यनृणां वरः ।
आख्याति स्म सनिःशेषं साभिचिन्तितमात्मनः ॥२१॥
पुत्रः प्रीति(त)मनाः प्राह तातो निजभुजार्जितम् ।
धर्मे धनं व्ययति चेत् तदन्यत् प्रार्थये किमु ॥२२॥
पुत्रः पितुः क्षणं(ऋणं) दत्ते मृतस्यापि धनग्रहात् ।
स्वयं तातो व्ययति चेत् तद्गतर्णः सुतो भवेत् ॥२३॥
सुतोदितेन तेनाथ जिननाथपथि स्थितः ।
संजातद्विगुणोत्साहो जिनदेवोऽभवत् तदा ॥२४॥
द्रुतमाकारयच्छ्रेष्ठी कक्कसूरिगुरूनथ ।
तथा व्यधाज्जिनदेवः सम्पूर्णं स्वमनोरथम् ॥२५॥

श्रेष्ठी हृष्टः कृतकृत्यो गुरूनूचे कृताञ्जलिः ।
कियदायुर्ममाद्यापि विद्यते चिन्त्यतां प्रभो ॥२६॥
विचिन्त्य सूरयः प्रोचुरायुर्मासत्रयावधि ।
विद्यते जिनदेव ! त्वं तद्धर्मनिरतो भव ॥२७॥
गुरूनभ्यर्थ्य स श्रेष्ठी तत्रैवात्थापयत् (?) ततः ।
अभवत् सोद्यमो धर्मे मृत्यौ सामीप्यमीयुषि ॥२८॥
आकार्य समये सूरीन् तत्समक्षमनाशकम् (?) ।
आददे सर्वं सत्त्वानां क्षामणं विदधे तथा ॥२९॥
संपाल्य निरतीचारमनाशकमयं दिवम् ।
ययौ मृत्यूत्सवं सर्वं पुत्रोऽकारयदस्य तु ॥३०॥
नागेन्द्रोऽथ गृहैश्वर्यं पालयन् कालयोगतः ।
पुत्रं प्राप्योपयाचितशतैर्मुदमुपागमत् ॥३१॥
निरीक्ष्यासौ तदङ्गेषु लक्षणश्रेणिमद्भुताम् ।
सल्लक्षण इत्यभिख्यां चक्रे पुत्रस्य सोत्सवम् ॥३२॥
सदभ्यस्तः सकलासु स कलासु क्षणादभूत् ।
व्यवहारे तथाऽऽचारे गुणेषु निपुणोऽपि च ॥३३॥
पुत्रे न्यस्तभरः सोऽपि नागेन्द्रोऽथ निजं धनम् ।
कृत्वा कृतार्थं क्षेत्रेषु सप्तस्वपि दिवं ययौ ॥३४॥
अथ ताते दिवं याते साधुसल्लक्षणोऽभवत् ।
स्ववेश्मविभवस्वामी चामीकरसमद्युतिः ॥३५॥
देवपूजाऽऽवश्यकादिधर्मकर्मसु बद्धधीः ।
गुरुभक्तिपरः कालं निनाय सुखितः सदा ॥३६॥
अथान्यदा गूर्जरत्रादेशात् कोऽपि समाययौ ।
ससार्थः सार्थपोऽगण्यपण्यमादाय य(त)त्पुरम् ॥३७॥
निजापणसमासीनं स्वस्थं सार्थपतिं मुदा ।
कौतुकेन किंवदन्तीं प्रष्टुं सल्लक्षणोऽवदत् ॥३८॥

आगतोऽसि कुतो देशात् स किदृशगुणर्द्धिमान्
पुरं तत्र वरं किंच सर्वमाख्याहि मे पुरः ॥३९॥
स आख्यद् गौर्जराद्-देशादायातोऽस्मि महामते ! ।
शक्तः स्यां तद्गुणान् वक्तुं यदि जिह्वा सहस्रवाक् ॥४०॥
तथाऽपि लेशतो देशगुणान् कानपि वर्णये ।
समृद्धिर्यद्यपीन्द्रस्याद्भुता तत्किं न कथ्यते ॥४१॥
समस्तसस्यसम्पत्तिनिष्पत्तिप्रत्यलाऽचला ।
प्रत्यासन्नजलापूर्णकूपाऽनूपाऽस्ति यत्र भूः ॥४२॥
यत्र नारंग-जंबीर-जम्बू-निम्ब-कदम्बकाः ।
रंभा-शोभांजना-स्वच्छकपित्थ-करमर्द्दकाः ॥४३॥
प्रियालु-पीलु-माकन्द-श्लेष्मातक-विभीतकाः ।
बीजपूर-खर्जूर-द्राक्षे-क्षु-पनसादयः ॥४४॥
बकुलः केतकी जाती चम्पकः शतपत्रिका ।
मल्लिका-वालक-जपा-समूला-यूथिकादयः ॥४५॥
फलन्ते(न्ति) येषु(ये तु) पुष्प्यन्ति तरवः केऽपि भूतले ।
कियन्तस्तव कथ्यन्ते सन्ति सर्वेऽपि तत्र ते ॥४६॥
[ चतुर्भिः कलापकम् ]

मुद्गा-ढकी-शालि-माष-गोधूमाश्च युगंधरी ।
इत्याद्यन्नानि सर्वाणि जायन्ते तत्र भूगुणात् ॥४७॥
यन्निवासी जनः सर्वो वेलाकूलेषु भूरिषु ।
व्यवसाये कृतेऽल्पेऽपि निःसीमश्रियमश्नुते ॥४८॥
यत्र नागरखण्डानि नागवल्लीदलानि च ।
रञ्जयन्ति मलिनास्यं मित्राणीव सदाऽङ्गिनाम् ॥४९॥
यत्र पाथेय-पानेय(नीय)वाहिनः केऽपि नाध्वगाः ।
प्रपा-कूप-सरो-ग्रामसत्राकारादिषु स्थिताः ॥५०॥
यत्राविरलवृक्षालीतलसंचारिणः पथि ।

पान्था न जातु सन्तापं लभन्ते तपनातपात् ॥५१॥
शत्रुञ्जय-रैवतकमुख्यतीर्थानि यत्र च ।
भव्यैरुपास्यमानानि प्रापयन्ति परं पदम् ॥५२॥
सोमनाथो ब्रह्मस्थानं मूलस्थानं रविस्तथा ।
यत्रेत्यादिकतीर्थानि विद्यन्ते लौकिकान्यपि ॥५३॥
यत्र कौ(कु)सुम्भ-मा(म)ञ्जिष्ठारक्तवस्त्राणि सर्वदा ।
विचित्राणि पट्टसूत्रव्युतान्याददते जनाः ॥५४॥
उपकारैः सदाचारैः प्रियालापैर्यदङ्गिनाम् ।
मुदितैर्विबुधैः प्रोचे यो विवेकबृहस्पतिः ॥५५॥
विद्यन्ते ये क्षितौ देशा जायन्ते नास्य ते समाः ।
स्वर्गो न दृष्टस्तत् तेन कथयामि कथं समः ॥५६॥
यस्य ग्रामा अपि पुरा(र)समा असमवैभवाः ।
ततः पुराणां संख्यानं कथयामि कथं तव ॥५७॥
अणहिल्लपुर-स्तम्भतीर्थमुख्यानि यत्र च ।
पुराणि सन्त्यसंख्यानि स्वःपुराभानि सत्तम! ॥५८॥
परं प्रल्हादनपुरं साम्प्रतं पुरमस्ति यत् । प्रल्हादनपुर-
तत्समानं किमपि चेत्स्वर्गे भवति वा न वा ॥५९॥ वर्णनम् ।
अपारधनसंसा(भा)रसमुपार्जनयोगतः ।
स्थलवेलाकूलमिति यत्पुरं गीयते जनैः ॥६०॥
प्रल्हादनविहाराख्यं श्रीवामेयजिनेशितुः ।
विद्यते मन्दिरं यत्र सुरमन्दिरसुन्दरम् ॥६१॥
सद्वालानकमूर्धस्थसुवर्णकपिशीर्षकैः ।
आबद्धशेखरमिवाभाति देवगृहेषु यत् ॥६२॥
सौवर्णदण्डकलशा-मलसारककान्तिभिः ।
प्रातर्लोका हतालोकं यदूर्ध्वं नेक्षितुं क्षमाः ॥६३॥
यत्रारात्रिकवेलायां निःस्वानध्वानव(त)र्जितः ।

कलिकालरिपुस्तस्मात् पुराद् दूरं पलायितः ॥६४॥
अगण्यपण्यपूर्णासु यस्मिन्नापणवीथिषु ।
क्रेयस्य न स्मरन्ति स्म जना अन्यान्यथे(वी)क्षिणः ॥६५॥
सगुणाः सवसूल्लासा रोहणाद्राविवान्वहम् ।
संघेशमणयो यत्र जायन्ते जनभूषणाः ॥६६॥
किमन्यद्वर्ण्यते तत्र कौतुकं यत्र साधवः ।
सकलत्रा अप्रतिमाः सन्ति देवालया अपि ॥६७॥
ईश्वराः सुगताः पौरा बुद्धा यत्र च जिष्णवः ।
अर्हन्तोऽपि शिवासक्ताः किं चित्रं वर्ण्यते परम् ॥६८॥
तस्मादहमिह श्रेष्ठिन् ! आगतो यदि तत्पुरम् ।
प्रत्यक्षं वीक्ष्यते दृष्ट्या कृतार्थो जायसे तदा ॥६९॥
श्रुत्वा सार्थपतिप्रोक्तं साधुधुर्यः सलक्षणः ।
समपद्यत सद्योऽसौ प्रल्हादनपुरोन्मनाः ॥७०॥
क्रमेण लभ्यं सम्बन्धं विधाय स्ववशे ततः ।
तेनैव सार्थपतिना सार्धं पन्थानमाश्रयत् ॥७१॥
प्रल्हादनपुरं प्राप सोऽप्यच्छिन्नप्रयाणकैः ।
विशतः पुरमध्ये तु शकुनास्तस्य जज्ञिरे ॥७२॥ यथा–
पोतकी दक्षिणे पक्षे प्रदेश(शे)शाद्वले स्थिता ।
दृष्टा सुचेष्टा कृत्वाऽथ पृथ्वारावं शिरःसमम् ॥७३॥
वामं यात्वा तरौ तत्र सहकारे न्यवीविशत् ।
तत्र स्थितताया मस्यातिः स्वयमेवास्यगाऽभवत्॥७४॥ [युग्मम्]
मणिकण्ठोऽपि सोत्कण्ठो दक्षिणाद् वामगोऽभवत् ।
श्वा सुस्थाने मूत्रयित्वा वामाद् दक्षिणमागमत् ॥७५॥
तदन्तर्विशतस्तस्य श्रीवामेयजिनेशितुः ।
रथः संमुखमायातः ससङ्घोऽथ पुरेऽभ्रमत् ॥७६॥
तदाऽयदृच्छाकुनिको मारवः सार्धमागतः ।

तवात्र तिष्ठतः पुत्र-धनलाभो भविष्यति ॥७७॥
त्वत्सन्ततिसमुत्पन्नास्तनयाः सङ्घनायकाः ।
भाविनः केऽपि तेऽप्यन्ये देववेश्मविधायिनः ॥७८॥
तीर्थोद्धारकरः सोऽपि चतुर्थ्यां तवसन्ततौ ।
भविता यदयं तुर्यः संजातः शाकुनो रसः ॥७९॥
सन्मान्य तं शाकुनिकं धन-ताम्बूलदानतः ।
नत्वा रथस्थश्रीपार्श्वं गुरूनथ ननाम सः ॥८०॥
प्रत्यक्षं वीक्ष्य तादृक्षं वर्णिताभ्यधिकं पुरम् ।
मन्यते स्म कृतार्थे स्वे लोचने जन्म-जीविते ॥८१॥
समादाय निवासायावासमायासवर्जितः ।
तस्थौ स्वस्थमना मानी सुखेन धनमार्जयत् ॥८२॥
तस्या(स्य चा)बद्धमूलस्य तिष्ठतः सुतरोरिव ।
काप्यपूर्वोऽभवच्छाया सर्वेषामाश्रयो यथा ॥८३॥
तत्रोपकेशगच्छस्य निश्रायां पार्श्वमन्दिरम् ।
विद्यते तत्र स श्रेष्ठी हृष्टो गोष्ठिकतां दधौ ॥८४॥
अथ तस्याभवत् पुत्र आजडो जलधेरिव ।
चन्द्रः सर्वकलाभोगयोगप्रीणितभूतलः ॥८५॥
विशेषतः पुनरयं भक्तिं श्रीपार्श्ववेश्मनि ।
चकार पोषधागारे स्वगुरूणां च सादरः ॥८६॥
पितर्युपरते कालयोगतः सोऽथ तत्पदे ।
आजडोऽजनि लोकानां मान्यो नान्योऽस्ति यत्पुरः ॥८७॥
वस्तुप्रकाशं विदधल्लोकोपकृतिमन्वहम् ।
स तत्राभ्युदयी जज्ञे पूर्वाचल इवार्यमा ॥८८॥
एकविंशत्यङ्गुलाङ्गं नाभेयं मूलनायकम् ।
तत्परिकरबिम्बानां ससत्याऽभ्यधिकं शतम् ॥८९॥
विधाप्य श्रीमदूकेशगच्छीये पार्श्वमन्दिरे ।

श्रीदेवगुप्तसूरिभ्यः प्रतिष्ठाप्य यथाविधि ॥९०॥
नूतनां देवकुलिकां कारयित्वा न्यवेशयत् ।
तत्पुरश्चातिविस्तीर्णं यो मण्डपमकारयत् ॥९१॥
[ त्रिभिर्विशेकम् ]
एवं वर्तमानस्य धर्मकार्येष्वहर्निशम् ।
क्रमेणास्य समुत्पन्नस्तनयो गोसलाह्वयः ॥९२॥
स पित्रा सदुपाध्यायात् सकला ग्राहितः कलाः ।
तथा यथाऽसावक्षेपात् दक्षजाताधिपोऽभवत् ॥९३॥
रूप-यौवनसम्पन्नां कुल-शीलगुणान्विताम् ।
कन्यां गुणमनाऽभिख्यां तावत् तं पर्यणाययत् ॥९४॥
जाया-पत्योस्तयोः प्रीतिभावभावितचेतसोः ।
कालः कियान् व्यतीताय सुखेन निरपाययोः ॥९५॥
अथाजडोऽपि विज्ञाय स्वायुः प्रान्तमुपागतम् ।
श्रीदेवगुप्तानाकार्य विज्ञप्तिं तत्पुरोऽकरोत् ॥९६॥
प्रभो ! यदस्मिन् समये युक्तं कर्तुमुपासकैः ।
निस्तारणार्थमधुना पूज्यैस्तदुपदिश्यताम् ॥९७॥
सूरयः कारयामासुर्मिथ्यादुष्कृतपूर्वकम् ।
आराधनां तस्य शुद्धां सिद्धान्तोक्तां यथाविधि ॥९८॥
ततश्चतुर्विधं संघं साधुः क्षामयति स्म सः ।
सर्वानप्यपरान् सत्त्वान् त्रिविधं त्रिविधेन च ॥९९॥
सप्तक्षेत्र्यामपि धनं व्यापितुं निजसूनवे ।
शिक्षामदात् स्वबन्धूनां विभज्य च पुनः स्वयम् ॥१००॥
चतुःशरणमाश्रित्य शुद्धध्यानपरः सुधीः
आदायानशनं पञ्च परमेष्ठिनमस्कृतीः ॥१०१॥
उच्चरन्नात्मना शृण्वन्नपि भव्यमुखोदिताः ।
शुद्धध्यानोऽमलगेहं गे(दे)हं मुक्त्वा दिवं ययौ ॥१०२॥

गोसलोऽपि पितुर्मृत्यूत्सवमाधाय साधयन् ।
सर्वकार्याणि पौराणां निन्ये कालमनाकुलः ॥१०३॥
धन्या गुणमताऽसूत लोकानन्दकरान् वरान् ।
क्रमेण त्रीनपि सुतान् कण्ठशक्तिरिव स्वरान् ॥१०४॥
आसाधरस्तेषु मुख्यो द्वितीयो देसलाह्वयः ।
लावण्यसिंहो लघुरप्यलघुर्योऽभवद् गुणैः ॥१०५॥
संयुतस्तैस्त्रिभिः पुत्रैः फणैरिव स तक्षकः ।
अधृष्योऽभवदन्येषामाधिपो भोगिनामपि ॥१०६॥
तेऽथ त्रयोऽपि तातेन कन्यकाः परिणायिताः ।
रत्नश्रीर्भोलिका लक्ष्मीरित्यासां क्रमशोऽभिधाः ॥१०७॥
निजादेशकृतां तेषां त्रयाणां तनुजन्मनाम् ।
साहाय्येन सुखेनैव कालं सोऽप्याति(त्य)वाहयत् ॥१०८॥
क्रमेण कर्मणो योगात् गोसलो निर्धनोऽभवत् ।
किं कस्यापि स्थिरा लक्ष्मीः स्वगृहेऽब्जेऽपि या चला ॥१०९॥
ततः स्वल्पर्द्धिकीभूतो गोसलोऽपि समाधिना ।
मृत्युं प्रापत् पापबुद्धिवर्जितः स्वायुषः क्षये ॥११०॥
आसाधरो लघुरपि वेश्मभारमपारधीः ।
दधौ किमिह धौरेयो वयो गणयति क्वचित् ॥१११॥
अथ जातु देवगुप्तसूरीणां जन्मपत्रिकाम् ।
आशाधरोऽदर्शयत् स्वां स्यामहमपि धनी प्रभो ! ॥११२॥
विचिन्त्य तां सूरयोऽपि प्रोचिरे शृणु भद्र ! भो ! ।
भविष्यस्यचिरेणैव त्वमपारधनेश्वरः ॥११३॥
परं यद्यर्जितं धर्मे न व्ययिष्यसि तद्धनम् ।
स्वयं यास्यति मत्वैतत् कुर्याः पुण्यमनश्वरम् ॥११४॥
स प्रणम्य गुरूनूचे चेत् प्रभो ! भविता धनम् ।
व्ययिष्यामि तदाऽन्यत्र विना धर्मं न कुत्रचित् ॥११५॥

प्रतिज्ञायेत्यसौ साधुस्ततः प्रभृति यद्धनम् ।
उपार्जयत्यल्पमपि सर्वं तद्धर्मसात्करोत् ॥११६॥
अन्यदा श्रीदेवगुप्तसूरीणां वन्दनाय सः ।
ययौ पोषधशालायां शालायां पुण्यदन्तिनः ॥११७॥
देवतावसरं तत्रावसरे कुर्वतो गुरून् ।
वन्दित्वा समुपाविक्षद् गुरुशुश्रूषणाय सः ॥११८॥
तदा गमे(ते)षु भिक्षार्थं साधूषूपाश्रये रयात् ।
क्रीडन्ती कन्यका काचिदाययौ सप्तवार्षिका ॥११९॥
तदानीमेव तद्देहेऽवतीर्णा सत्यका सुरी ।
पृष्टा प्रभुभिराचख्यौ सर्वार्थांश्चित्तचिन्तितान् ॥१२०॥
आशाधरोऽपि हि गुरून् नत्वा प्राह प्रभो ! मम ।
कदा कस्माद्धनं भावि न वेति पृच्छ्यतां सुरी ॥१२१॥
गुरुपर्यनुयुक्ता सा जगाद जगदीश्वरी ।
स्वल्पैरहोभिरेवास्य मिलिष्यति धनं बहु ॥१२२॥
परं दिशो दक्षिणस्या भावी लाभोऽस्य सर्वदा ।
नोत्तरस्या न पूर्वायाः पश्चिमायास्तथा नहि ॥१२३॥
इत्युदीर्यान्तर्हितायां सत्यकायामथ प्रभुः ।
आशाधरशिरस्याधाद् वासानाशातरुधि(नसातरोध)कान् ॥
ततो देवगिरावाशाधरः साधुरमंडयत् ।
यातायातैर्बान्धवानां व्यवहारमनारतम् ॥१२५॥
क्रमेण व्यवसायेन मन्दरेण विलोडित- ।
दक्षिणाशाम्बुधौ लक्ष्मीं स लेभे पुरुषोत्तमः ॥१२६॥
पूर्वादिष्टगुरूणां स संस्मरन् धर्मकर्मसु ।
व्ययति स्म धनं सप्तक्षेत्रेषु विशदाशयः ॥१२७॥
अथ लक्षेश्वरीभूतः साधुरासाधरोऽन्यदा ।
श्रीदेवगुप्तसूरीणां विज्ञप्तिं पुरतोऽकरोत् ॥१२८॥

ग्लान[भा]वास्थिताः पूज्या विजयन्ते जरावृताः ।
तत् कुरुध्वं सूरिपदं कुर्वेऽहं विभवव्ययम् ॥१२९॥
तच्छ्रुत्वा सूरयः प्रोचुः साधो! नेयं गणस्थितिः ।
यद्विना सच्चिकादेशमपरः क्रियते गुरुः ॥१३०॥
सैव देवी तदादेशं यदाऽस्माकमपि स्वयम् ।
प्रदास्यति विधास्यामस्तदा सूरिं न चान्यथा ॥१३१॥
साधुः प्राह प्रभोऽन्यत्रैकैकस्मिन्नपि सूरयः ।
क्रियन्ते बहवः किं नो गण एको भवेद् गुरुः ॥१३२॥
तद् गच्छसंस्थितिं पूज्याः! किञ्चित् श्रावयताधुना ।
यदविज्ञातवृत्तान्तो मर्त्यो भावि(वी)विमूढवत् ॥१३३॥
गुरुरूचेऽखिलं वृत्तं गदितुं न वयं क्षमाः ।
संक्षेपेण शृणु परं कथ्यमानमिदं मया ॥१३४॥
अस्यामेवावसर्पिण्यां त्रयोविंशजिनेशितुः। ऊकेशगच्छसंस्थितिः।
शिष्यः श्रीपार्श्वनाथस्य शुभदत्तो गणेश्वरः ॥१३५॥
केशिनामा तद्विनेयः यः प्रदेशिनरेश्वरम् ।
प्रबोध्य नास्तिकाद्धर्माज्जैनधर्मेऽभ्यरोपयत् ॥१३६॥
तच्छिष्याः समजायन्त श्रीस्वयंप्रभसूरयः ।
विहरन्तः क्रमेणेयुः श्रीश्रीमालं कदापि ते ॥१३७॥
तस्थुस्ते तत्पुरोद्याने मासकल्पं मुनीश्वराः ।
उपास्यमानाः सततं भव्यैर्भवतरुच्छिदे ॥१३८॥
तदा च वैताढ्यनगे मणिरत्न इति प्रभुः ।
विद्याधराणामैश्वर्यं पालयन्नस्ति विश्रुतः ॥१३९॥
स चान्यदाऽष्टमद्वीपे दक्षिणस्यां दिशि स्थिते ।
नित्योद्यताञ्जनगिरौ शाश्वतान् जिननायकान् ॥१४०॥
विवन्दिषुर्विमानानां लक्षेण सहितोऽम्बरे ।
गच्छन् ददर्श तान् सूरीन् मुनिपञ्चशतीयुतान् ॥१४१॥

नोल्लङ्घ्यं जङ्गमं तीर्थं मत्वाऽतोऽवततार च ।
प्रणम्य भक्त्या न्यषदद् देशनाकर्णनेच्छया ॥१४२॥
सूरयोऽपि हि संसारासारतापरिभाविकाम् ।
तादृशीं देशनां चक्रुः स यथाऽभूद् विरक्तधीः ॥१४३॥
निवेश्याथ सुतं राज्येऽनुज्ञाप्य च निजं जनम् ।
विद्याधरपञ्चशतीयुतो व्रतमुपाददे ॥१४४॥
स गीतार्थः क्रमेणाथ सूरिभिः स्वपदे कृतः ।
मुनिपञ्चशतीयुक्तो विजहार धरातले ॥१४५॥
कदाचिदूकेशपुरे सूरयः समवासरत् ।
सूरीणां तस्थुषां कोऽपि नाकार्षीद् वन्दनादिकम् ॥१४६॥
तमनादरमालोक्य सूरीणां शासनामरी ।
गौरवार्थं शासनस्योत्सर्पणायै मनो न्यधात् ॥१४७॥
इतश्च श्रेष्ठी तत्रास्ते ऊहडः कृष्णमन्दिरम् ।
कारयन्नतुलं नित्यं पुण्यवान् पुण्यहेतवे ॥१४८॥
तन्मूलनायककृते श्रीवीरप्रतिमां नवाम् ।
तस्यैव श्रेष्ठिनो धेनोः पयसा कर्तुमादृणात् ॥१४९॥
घटोध्नी श्रेष्ठिनो धेनुः सायं निर्गत्य गोकुलात् ।
लावण्यह्रदनामाद्रौ क्षीरं क्षरति नित्यशः ॥१५०॥
गोपालः श्रेष्ठिनाऽप्रच्छि दुग्धाभावस्य कारणम् ।
तेन सम्यग् विनिश्चित्य कथितं दर्शितं च तत् ॥१५१॥
सोऽपि विप्रानथापृच्छच्छ्रेष्ठी दर्शनिनोऽखिलान् ।
स्वगोर्दुग्धस्रावहेतुं तेऽप्याख्यन्नैकभाषया ॥१५२॥
मिथोविभिन्नवाच्येभ्यस्तेभ्यः संदिग्धमानसः ।
मासान् पञ्च व्यतिक्रामत् साधिकान् कतिभिर्दिनैः ॥१५३॥
सूरयोऽपि मासकल्पं तत्र कृत्वाऽन्यतो गताः ।
चतुर्मासककल्पान्ते पुनस्तत्पुरमागमन् ॥१५४॥

तान् पुरोद्यानभूभागे संस्थितानवगत्य सः ।
सूरीनुपेत्य पप्रच्छ श्रेष्ठी संदेहमात्मनः ॥१५५॥
तद्विज्ञाय शुभोदर्कं सूरिः प्रोवाच तं स्फुटम् ।
ततस्ते संशयं श्रेष्ठिन्नपनेष्याम्यसंशयम् ॥१५६॥
श्रद्दधानः स तद्वाक्यं स्वमन्दिरमयाद् रयात् ।
सूरयोऽपि व्यधुर्ध्यानं निश्यागाच्छासनामरी ॥१५७॥
व्यजिज्ञपदिदं देवी प्रभो ! वीरजिनेशितुः ।
कुर्वाणाऽस्मि नवं बिम्बं षण्मास्या तद् भविष्यति ॥१५८॥
प्रभवः प्रोचिरे देवि ! प्रत्यक्षीभूय तत्पुरः ।
सर्वमेतत् समाख्याहि सू(स्व)मुखेन यथायथम् ॥१५९॥
साऽपि गुर्वाज्ञया गत्वा तत्र प्रत्यक्षरूपिणी ।
श्रेष्ठिनं गतनिद्रं द्राक् प्राह विस्मितमानसम् ॥१६०॥
भो श्रेष्ठिन् ! गुर्वनुज्ञाता जा(ऽऽया)ताऽहं शासनामरी ।
गोश्रा(स्रा)वहेतुं निरतुं (?) शृणु तत्प्रयताशय ! ॥१६१॥
त्वद्गोक्षीरेण वीरस्य कुर्वाणा प्रतिमां नवाम् ।
वर्तेऽहं मास्म तत्कार्षीः सन्देहं गेहमेनसः ॥१६२॥
इत्युक्त्वा सा तिरोऽधत्त सोऽपि मोहवशंवदः ।
प्रातर्गत्वा च नत्वा च गुरुपादावुपाविशत् ॥१६३॥
संयोज्य पाणी सोऽपृच्छत् प्रश्नं स्वीयमथ प्रभुः ।
प्रोचे शासनदेवी स आचचक्षे स्वयं निशि ॥१६४॥
यद्यप्येवं परं पूज्यैस्तथापि प्रतिपाद्यताम् ।
ततः सर्वं यथावृत्तं गुरुराख्यातवानपि ॥१६५॥
व्यजिज्ञपदथ श्रेष्ठी शीघ्रं संचलतो(त) प्रभो ! ।
यथा वीरजिनेशस्य बिम्बं निष्काश्यतेऽधुना ॥१६६॥
सूरयोऽपि विलम्बस्व सा(शा)रदः सप्तवासरीम् ।
आनेष्यामः शुभे लग्ने पूर्णीभूतामिदं जगुः ॥१६७॥

श्रेष्ठ्यपि प्राह तल्लग्नं शुभं यत्र सुरीवचः ।
पूज्यादेशश्च(स्तु)तच्चू(च्चू)र्णं (?) पूर्णं कुरु मतं मम ॥१६८॥
अत्याग्रहात्तस्य पूज्याश्चेलुश्चश्चलतोज्झिताः ।
श्रेष्ठिना सहितास्तत्र यत्र वीरजिनेश्वरः ॥१६९॥
तत्र स्वर्णमययवस्वस्तिकं कुसुमानि च ।
वीक्ष्य स्वयं खनितोर्वी श्रेष्ठि(ष्ठी)प्राकाशयज्जिनम् ॥१७०॥
हृदये निम्बुकफलसमग्रन्थीद्वयान्वितम् ।
वर्धमानजिनं श्रेष्ठी हृष्टो देवगृहेऽनयत् ॥१७१॥
ततः प्रतिष्ठालग्नानि शोधयित्वा विशुद्धधीः ।
लग्नमेकं विनिश्चिक्ये सर्वदोषविवर्जितम् ॥१७२॥
माघमासे शुक्लपक्षे पूर्णायां पञ्चमीतिथौ ।
ब्राह्मे मुहूर्ते वारे च गुरु(रौ)लग्नं पुनर्धनुः ॥१७३॥
तदुपस्करकार्याणां मीलने यावदादृतः ।
श्रेष्ठी प्रवर्तते व्यग्रः सूरिवाक्याद् यथाविधि ॥१७४॥
तावत्कोरंटकपुरा(रात्) संघविज्ञप्तिपाणयः ।
श्रावकाः समुपेत्याशु सूरिपादान् ववन्दिरे ॥१७५॥
व्यजिज्ञपदिदं पूज्याः! कोरंटकपुरे वरे ।
श्रीवीरमन्दिरं संघो बिम्बं चाकारयन्नवम् ॥१७६॥
तत्प्रतिष्ठाविधानाय संघाभ्यर्थनयाऽनया ।
प्रसीद भगवन्नेहि पूरयास्मन्मनोरथान् ॥१७७॥
तदेव लग्नं विज्ञप्तेरवधार्य धियां निधिः ।
सूरिः प्रोचे कथं भव्या! घटतेऽस्माकमागमः ॥१७८॥
यत्तत्राप्यूचे नैकं लग्नं शुद्धं न चापरम् ।
तदप्रत्यं कथं त्यक्त्वा कार्यमन्यत्र गम्यते ॥१७९॥
तच्छ्रुत्वा सन्निपादांस्तान् वीक्षापन्नान् विलोक्य च ।
प्रभुराह मा स्म यूयं विषीदथ्वं मुधा बुधाः! ॥१८०॥

देहैष्यादिह लग्नत्वाश समं लग्नसाधनम् ।
परमत्र साधयित्वा व्योम्नाऽऽयास्यामि तत्र हि ॥१८१॥
कार्या प्रतिष्ठासामग्री भवद्भिः कृतनिश्चयैः ।
तथा तत्रैव लग्नेऽहं कुर्वे संघसमीहितम् ॥१८२॥
ततः प्रोल्लसितानन्दाः श्रावकाः सूरिपुङ्गवम् ।
वन्दित्वा स्वपुरं जग्मुः संघार्यचरघुराशु ते (?) ॥१८३॥
ततः सर्वापि सामग्री प्रतिष्ठाया उपासकैः ।
मिलित्वा मीलयामासे माघे मासे यथाविधि ॥१८४॥
ततः श्रीमत्युपकेशपुरे वीरजिनेशितुः ।
प्रतिष्ठां विधिनाऽऽधाय श्रीरत्नप्रभसूरयः ॥१८५॥
कोरण्टकपुरे गत्वा व्योममार्गेण विद्यया ।
तस्मिन्नेव धनुर्लग्ने प्रतिष्ठां विदधुर्वरम् ॥१८६॥ [युग्मम]
श्रीमहावीरनिर्वाणात्सप्तत्या वत्सरैर्गतैः ।
ऊकेशपुरवीरस्य सुस्थिरा स्थापनाऽजनि ॥१८७॥
भूयोऽपि व्योमयानेन व्याद(वृ)त्यागत्य सूरयः ।
श्रेष्ठिनं बोधयामासुर्जिनस्नानार्चनक्रियाम् ॥१८८॥
स क्रमादूहडः श्रेष्ठी जिनधर्मधरोऽभवत् ।
शुद्धसम्यक्त्वभृद् यस्य परिवारोऽपि चाभवत् ॥१८९॥
श्रीरत्नप्रभसूरीणामागत्यागत्य तस्थुषाम् ।
मासकल्पा अनेके च व्यतीयुः कल्पसेविनाम् ॥१९०॥
एवं तत्र पुरे पूज्याः संस्थिता वणिजामथ ।
अष्टादश सहस्राणि जंघानां प्रत्यबोधयन् ॥१९१॥
अन्यदोपासकाः पूज्यैः प्रोक्ता मा चण्डिकार्चनम् ।
कुरुध्वं यदियं सत्त्वघातपातकिनी सदा ॥१९२॥
सप्रभावा प्रभो ! देवी नार्च्यते यदि तद् ध्रुवं ।
हन्ति नः सकुटुम्बानप्येवं प्राहुरुपासकाः ॥१९३॥

अहं रक्षां करिष्यामीत्युक्ते सूरिभिरर्चनात् ।
निवृत्ताः श्रावकाः सर्वे कुप्यन्ति स्माथ सा गुरौ ॥१९४॥
छलं विलोकयन्त्यस्थात् सा गुरूणामहर्निशम् ।
सायं ध्यानविहीनानां नेत्रपीडामकल्पयत् ॥१९५॥
विज्ञाय ज्ञानतो हेतुं पूज्या देवीमकीलयन् ।
तथा यथा सकष्टाऽभूच्छल्यकीलितदेहवत् ॥१९६॥
अज्ञानभावविहितोऽपराधः क्षम्यतां मम ।
न विधास्ये पुनः स्वामिन्नेवं जातु प्रसीदत ॥१९७॥
सूरिरूचे कथं रोषः साऽऽह मत्सेवकान् भवान् ।
अरक्षयन्मदभीष्टं कुर्वाणान् तेन रोषिणी ॥१९८॥
किमभीष्टमिति पृष्टे कडडामडडा मम ।
दास्येऽहं देवि ! तेऽभीष्टं मदुक्तं चेत् करिष्यसि ॥१९९॥
लब्धेऽभीष्टे प्रभोऽवश्यं वश्या त(त्व)त्कामितं द्रुतम् ।
भवित्रीति वदन्तीं त्वां जगुराचार्यपुङ्गवाः ॥२००॥
निजप्रतिज्ञावचनं स्थिरीभाव्यं त्वया सदा ।
कडडां मडडां देवि ! दास्ये तत्र रतिं कृथाः ॥२०१॥
प्रतिज्ञाय गुरूक्तं तत् देवी सद्यस्तिरोदधे ।
प्रातः सर्वानपि श्राद्धान् गुरवः प्रत्यमीलयन् ॥२०२॥
मिलितानां श्रावकाणां पुरतः सूरयोऽवदन् ।
पक्वान्नानि वि[धा]प्यन्तां सुहाल्याप्रभृतीनि भो ! ॥२०३॥
प्रतिगेहं घनसारा-गरु-कस्तूरिकादिकः ।
भोगः संमीलि(ल्य)तां भा(भो)ग्यो गृह्यतां कुसुमानि च ॥
कृत्वैवं पौषधागारे शीघ्रमागम्यतां यथा ।
चण्डिकायतने यामः संघेन सहिता वयम् ॥२०५॥
पूज्योपस्करमादाय श्रावकाः पौषधौकसि ।
अभ्येयुः सूरयः सार्धं तैर्देवीसदने ययुः ॥२०६॥

अपूपुजन् सुरीं श्राद्धैः सूरयो द्वारसंस्थिताः ।
अवदंश्च निजाभीष्टं लाहि देवि ! ददाम्यहम् ॥२०७॥
इत्युक्त्वोभयपार्श्वस्थपक्वान्नभृतशुण्डिके ।
पाणिभ्यां घूर्णयित्वोचुः स्वाभीष्टं देवि ! गृह्यताम् ॥२०८॥
अथ प्रत्यक्षरूपेण सूरीणां पुरतः स्थिता ।
प्राह प्रभो ! मदभीष्टा कडडा मडडा परा ॥२०९॥
गुरुरूचे न सा युक्ता लातुं दातुं च ते मम ।
पलादा राक्षसा एव देवा देवि ! सुधाशनाः ॥२१०॥
ततो जीवदयाधर्मं सारमेकं समाश्रय ।
बुद्ध्वा तमुररीकृत्य गुरूक्तं प्राह सा सुरी ॥२११॥
परमस्मि सारणायाः स्मर्तव्या समये सदा ।
धर्मलाभः प्रदातव्यो देवतावसरे कृतो (तौ) ॥२१२॥
तथा कुङ्कुम-नैवेद्य-कुसुमादिभिरुद्यतैः ।
श्रावकैः पूजयेध्वं मां यूयं साधर्मिकीमिव ॥२१३॥
दीर्घदर्शिभिरालोच्य श्रीरत्नप्रभसूरिभिः ।
तद्वाक्यमुररीचक्रे यत् सन्तो गुणकाङ्क्षिणः ॥२१४॥
सत्यप्रतिज्ञा जातेति चण्डिका पापखण्डिका ।
सत्यकेति ततो नाम्ना व(वि)दितं भुवनेऽभवत् ॥२१५॥
एवं प्रबोध्य तां देवीं सर्वत्र विहरन् प्रभुः ।
सपादलक्षं श्राद्धानामधिकं प्रत्यबोधयत् ॥२१६॥
श्रीमहावीरनिर्वाणाद् द्विपञ्चाशति वत्सरे ।
गुरोः सूरिपदं प्राप्य ततोऽष्टादशहायनैः ॥२१७॥
ऊकेश-कोरण्टकयोः पुर्योस्त्रिशलाभुवः ।
जिनस्य बिम्बे संस्थाप्य चामुण्डां प्रतिबोध्य च ॥२१८॥
सपादलक्षमधिकश्राद्धानां प्रतिबोध्य च ।
चारित्रं निरतीचारं पालयित्वा यथोदितम् ।२१९॥

यक्षदेवाह्वयं सूरिं स्वपदे विनिवेश्य च ।
वर्षाणां चतुरशीतेरायुषोऽन्ते दिवं ययौ ॥२२०॥ [चतुर्भिः कलापकम्]
श्रीयक्षदेवस्तत्पदे पूर्वाचल इवार्यमा ।
सूरिरभ्युद्यतो रेजे तमःस्तोमहरोऽङ्गिनाम् ॥२२१॥
सूरिः कोरण्टकपुरे कदापि विहरन् ययौ ।
माणिभद्राख्ययक्षस्य सद्मनि स्थितिमादधे ॥२२२॥
तच्छिष्यो लघुकः कोऽपि यक्षमूर्द्धनि मौर्ख्यतः ।
बालभावाच्चञ्चलत्वात् पात्रक्षालनवार्यधात् ॥२२३॥
ततः प्रकुपितो यक्षः शिष्यं तं ग्रहिलं व्यधात् ।
सूरयो ज्ञानतो ज्ञात्वा निग्रहं साग्रहं व्यधुः ॥२२४॥
निगृहीतः स आचार्यैः सेवकत्वं प्रपन्नवान् ।
यक्षाराद्धपदस्यास्य सान्वयं नाम चाभवत् ॥२२५॥
कक्कसूरिं गुरुं सोऽपि स्वपदेऽस्थापयत् प्रभुः ।
यद्गुणान्नेश्वरो गातुं सोऽपि चित्रशिखण्डिजः ॥२२६॥
तस्य पदे सिद्धसूरिर्गुरुरासीद्धियां निधिः ।
वीक्ष्य यत्सूक्ष्मदर्शित्वं कविः स्वाक्षि रुषाऽकृषत् ॥२२७॥
तत्पदे श्रीदेवगुप्तसूरयो गुणभूरयः ।
जज्ञिरे यद्यशःशौक्ल्यदूषितोऽगान्नभः शशी ॥२२८॥
नामभिः पञ्चभिर्गच्छः पञ्चानन इवाननैः ।
भासमानोऽभिनत् वादिकुम्भिकुम्भस्थलान्ययम् ॥२२९॥
एवं व्यतीयमानेषु गच्छेऽस्मिन् सूरिषु क्रमात् ।
कक्कसूरिगुरुर्जज्ञे विश्ववर्ण्यगुणाश्रयः ॥२३०॥
तदन्वये यक्षदेवसूरिरासीद्धियां निधिः ।
दशपूर्वधरो वज्रस्वामी भुव्यभवद् यथा ॥२३१॥
दुर्भिक्षे द्वादशाब्दीये जनसंहारकारिणि ।
वर्तमाने नाशकेन(केऽत्र) स्वर्गेऽगुर्बहुसाधवः ॥२३२॥

ततो व्यतीते दुर्भिक्षे विशिष्टेषु तु साधुषु ।
मिलितेषु यक्षदेवाचार्योश्चन्द्रगणो(णम)मिलन् ॥२३३॥
तदादि चन्द्रगच्छस्य शिष्यप्रव्राजनाविधौ ।
श्राद्धानां वासनिक्षेपे चन्द्रगच्छः प्रकीर्त्यते ॥२३४॥
गणः कोटिकनामापि वज्रशाखाऽपि सम्मता ।
चान्द्रं कुलं च गच्छेऽस्मिन् साम्प्रतं कथ्यते ततः ॥२३५॥
शतानि पञ्च साधूनां पुनर्गच्छेऽमिलन्निह ।
शतानि सप्त साध्वीनां तथोपाध्यायसप्तकम् ॥२३६॥
दश द्वौ वाचनाचार्याश्चत्वारो गुरवस्तथा ।
प्रवर्तकौ द्वावभूतां तथैवोभे महत्तरे ॥२३७॥
द्वादश स्युः प्रवर्तिन्यः सुमती द्वौ महत्तरौ ।
मिलिते(तौ) चन्द्रगच्छंतेः(च्छान्तः) संख्येयं कथ्यते गणे ॥
पञ्चनामक्रमेणाथ जायमानेषु सूरिषु ।
सूरयः समजायन्त पुनः श्रीकक्कसूरयः ॥२३९॥
श्रीसत्यदेवी-सर्वाण(र्वानु)भूति-चक्रेश्वरीगिरा ।
श्रीरत्नप्रभसूरीणां यक्षदेवस्य च प्रभोः ॥२४०॥
नाम्नी निवारयामास गुरुः पात्राणि साम्प्रतम् ।
तादृंशि न भविष्यन्ति दीयेते यादृशामिमे ॥२४१॥
तदादि नामद्वितयं मुख्यं कोशे व्यवस्थितम् । [युग्मम्]
वर्तमानमिदानीं तु पाश्चात्यमभिधात्रयम् ॥२४२॥
नामत्रयक्रमेणाथ सूरयो भूरयोऽभवन् ।
यावत् श्रीसिद्धसूरीणां पट्टेऽभूवमहं गुरुः ॥२४३॥
एवं त्रीण्येव नामानि जायन्तेऽत्र गणे क्रमात् ।
चतुर्थं नाम न भवेदेक एव गुरुस्ततः ॥२४४॥
परं येऽत्र गणे पूर्वं गुरवो गुणिनोऽभवन् ।
तेषां ख्यातिवृत्तानि यदि देवगुरुः स्वयम् ॥२४५॥

* × × ×

परमेकोऽपि गच्छेऽस्मिन् भवेदूकेशवंशजः ।
विशुद्धोभयपक्षो यः स आचार्यो गुणाश्रयः ॥२४६॥
ततः साधो ! यदा देवी स्वयमेवोपदेक्ष्यति ।
तदा सूरिपदं दास्ये गोलकं त्वत्करेऽथवा ॥२४७॥
एवमुक्तो देवगुप्तैः साधुराशाधरोऽवदत् ।
पूर्यतां भगवन्! कः किं स्वस्थितिं लङ्घयेत्सुधीः ॥२४८॥
वर्षाणां चतुरशीतेर्गतानां गुरवो निजाम् ।
विज्ञातुमायुर्ध्यानस्थास्ते स्मरन्ति स्म सत्यकाम् ॥२४९॥
प्रत्यक्षीभूय साप्यूचे त्रयस्त्रिंशद्दिनानि ते ।
आयुरस्ति तदत्रैव कुरु सूरिपदं स्वयम् ॥२५०॥
देवि ! सूरिपदस्यैषु शिष्येष्वर्हो न वीक्ष्यते ।
तत्कस्मै दीयते सूरिपदं किं करवाण्यहम् ॥२५१॥
देव्यूचे बालचन्द्रोऽयमर्हः सूरिपदस्य ते ।
ऽभिहिता भाग्यवानेवाजीवं सिद्धकरोऽपि च ॥२५२॥
अथाशाधरमाकार्य प्रोचिरे सूरयः गिरम् ।
अद्य मे देवताऽऽदेशो निशीथिन्याममभूदयम् ॥२५३॥
यदितो दिवसादायुस्त्रयस्त्रिंशद्दिनानि ते (मे) ।
आस्ते तद्बालचन्द्रं द्राक् निजपदे निवेशय ॥२५४॥
पूर्वमेवात्र कार्ये ते कार्ये भावोऽभवत्ततः ।
साधो ! विधेहि सामग्रीं समग्रामपि सत्वरम् ॥२५५॥
स्वं गुर्वादेशतो धन्यं मन्यमानः सपद्यपि ।
स साधुः कारयामास सामग्रीमखिलामपि ॥२५६॥
ख-वह्नि-वह्नि-चन्द्राब्दे (१३३०)श्रीविक्रमनृपाद् गते ।
फाल्गुने मासि नवमीदिवसे शुक्रवासरे ॥२५७॥

* अत्र कश्चित् पाठस्त्रुटितः संभाव्यते ।

अत्यादरसमाहूते समग्रगुणसूरिषु ।
समायातेषु सत्साध्वी-श्रावक-श्राविकादिषु ॥२५८॥
मन्दिरे पार्श्वनाथस्य महामहपुरस्सरम् ।
श्रीदेवगुप्तः स्वपदे सिद्धसूरिं गुरुं व्यधात् ॥२५९॥
[ त्रिभिर्विशेषकम् ]
साधुराशाधरः संघवात्सल्यं विदधे तथा ।
अस्मरन् वस्तुपालस्य सर्वदर्शिनिनो यथा ॥२६०॥
श्रीदेवगुप्ता गुरवः क्रमेण त्रिदिवं गताः ।
तत्संस्कारधरायां तु स्तूपं साधुरकारयत् ॥२६१॥
अथ श्रीसिद्धसूरीणां स्थापनाकरणादनु ।
साधोराशाधरस्यासीत्समृद्धिरधिकाधिका ॥२६२॥
योऽमर्त्यमहितोऽमेयमन्दरागस्थितिं वहन् ।
सर्वकामितदानेषु कल्पद्रुम इवार्थिनाम् ॥२६३॥
यस्य वेश्मनि सूरीणां साधवो युग्मसंस्थिताः ।
प्रासुकैरन्नपानाद्यैर्विचरन्ति यथारुचि ॥२६४॥
एकाकिनः साधवो ये विद्यन्ते गच्छनिःसृताः ।
तेषां विचरतां संख्यां कर्तुं कोऽपि न हि क्षमः ॥२६५॥
योगिनस्तापसा विप्रा रङ्काः क(का)र्पटिकास्तथा ।
भट्टाश्चिट्टा गायना ये ददौ तेषामपीहितम् ॥२६६॥
आशाधरोऽप्यभूदाशारूपको यः सदाऽर्थिनाम् ।
धृतसत्त्वोऽपि यः सत्त्वोपकृतौ कृतनिश्चयः ॥२६७॥
रेजे रत्नश्रिया पत्न्या स भाग्याधिकया तया ।
रोहिण्येव निशानाथः स्फुरदम्बरतारया ॥२६८॥
अस्तुतया नायिकया सुसुख्यो(सुख्या)क्षेत्रसप्तके ।
सरथवापविधिश्चक्रे यः सुखेन गृहस्थया ॥२६९॥
अन्यदा पौषधागारे साधुराशाधरो ययौ ।

सिद्धसूरिगुरून्नत्वा प्राञ्जलिः समुपाविशत् ॥२७०॥
सूरयोऽथ यथावस्थभवभावविभाविकाम् ।
कर्तुमारेभिरे धर्मदेशनां सुक्तिरा गिरा ॥२७१॥
यथा भवेऽत्र भ्रमतां देहिनां दुर्लभा किल ।
मानवत्वादिसामग्री धर्मसाधनहेतुका ॥२७२॥
मानुष्यमार्यविषयः सुकुलं भावना तथा ।
गुरूपदेशश्रवणं नीरोगत्वं विवेकिता ॥२७३॥
तद् दुष्प्रापामिमां प्राप्य सामग्रीमखिलां बुधैः ।
धर्मे एवोद्यमः कार्यः सिद्धिः स्यात् सुलभा यथा ॥२७४॥
धर्मो जिनैरयं प्रोक्तः सावद्यार्थविवर्जनम् ।
सर्वतो देशतो वापि द्विभेदः स भवेत् पुनः ॥२७५॥
सर्वसावद्यविरतिश्चारित्रं व्रतिनां भवेत् ।
आद्यो भेदोऽपरो देशविरतिर्गृहिणामपि ॥२७६॥
अहिंसा-सूनृता-स्तेय-ब्रह्मचर्या-परिग्रहैः ।
सर्वतस्त्यक्तसंगानां यतीनां स महाव्रतैः ॥२७७॥
अहिंसा-सूनृता-स्तेय-ब्रह्मचर्या-परिग्रहैः
देशतस्त्यक्तसङ्गस्य गृहिणो हि व्रतात्मकः ॥२७८॥
दिग्विरतिप्रभृतयो गृहिधर्मे गुणास्त्रयः ।
तथा सामायिकाद्यं च शिक्षाव्रतचतुष्टयम् ॥२७९॥
एवं द्वादशभेदः स्याद् गृहिधर्मस्तथाऽपरे ।
दान-शील-तपो भावास्तैराराध्यो विशेषतः ॥२८०॥
तन्निदानं सदा दानं पात्रेभ्यो देयमुत्तमम् ।
ऐहिकामुष्मिका लक्ष्म्यो लभ्यन्ते शंखवद्यतः ॥२८१॥

तथाहि- } पात्रदानविषये शंखराजकथा ।

अस्यैव जम्बूद्वीपस्य दक्षिणाशाविशेषके ।
धर्मस्या(आ)न्यभवक्षेत्रे क्षेत्रे भद्रलमालि ॥२८२॥

विद्यते मध्यदेशेषु पुरं रत्नपुरं वरम् ।
यद् विलोक्य मरुल्लोकः स्वर्लोकेऽभूद् गतस्पृहः ॥२८३॥
प्रतापदहनप्लुष्टदुष्टपक्षः क्षमापतिः ।
तत् पालयति भूपालपालिसेव्यो नरोत्तमः ॥२८४॥
यदास्यविजितः सोमो नभो ह्रीण इवागमत् ।
सुकुला सुकला तस्य पट्टदेवी वसुन्धरा ॥२८५॥
अथो मिथोऽनुरागोत्थप्रीतिनिर्भरचेतसोः ।
कालः कियान् व्यतीयाय निरपायश्रियोस्तयोः ॥२८६॥
अन्यदा वन्यदावाग्निधूमाभतिमिरातुरे ।
वसुन्धरा निशामध्ये सुपुप्ता स्वप्नमैक्षत ॥२८७॥
यथा शार्ङ्गभृता दत्तः स्वशंखः स्वकरान्मम ।
प्रविश्य वदने तस्थौ मुक्ता शुक्ताविवोदरे ॥२८८॥
प्रबुद्धाऽथ समुत्थाय कायद्वैगुण्यभृन्मुदा ।
गत्वा प्रियाय चाचख्यौ स्वदृष्टं स्वप्नमादरात् ॥२८९॥
आकर्ण्य कर्णपीयूषप्रतिमं तद्वचो नृपः ।
उल्लसत्पुलकांकूरपूरस्थपुटितोऽभवत् ॥२९०॥
विमृश्य स्वधिया स्वप्नं तत्पुरो व्याकरोत्यलम् ।
विष्णुवज्जिष्णुरत्नोऽस्तु भावी सुतनु ! ते सुतः ॥२९१॥
त्रपुषीवल्लिवत्सर्वाङ्गीणकण्टकिता मुदा ।
ग्रन्थौ बद्ध्वा स्ववस्त्रान्ते स्वप्नं साऽऽत्तमिव व्यधात् ॥२९२॥
ततः स्वपत्यनुज्ञाता याता सा निजमन्दिरम् ।
तदैवावतरत् कोऽपि तत्कुक्षौ त्रिदिवात् सुरः ॥२९३॥
रोहणोर्वीव तत्कुक्षिश्चिन्तामणिमिवात्मजम् ।
बभार सर्वसंसारसारभूतं विभूतिदम् ॥२९४॥
गर्भः क्रमेण वर्धिष्णुर्विदधे शुभदोहदान् ।
देवपूजा-महादानो-पकारप्रमुखानसौ ॥२९५॥

पूरयामास वसुधाधीशः सकलदोहदान् ।
तादृग्भाग्यवतां कार्ये किं विलम्बः क्वचिद् भवेत् ॥२९६॥
मनोऽनुकूलैराहारैर्विहारैः शयनासनैः ।
सिचयैः सिचयैस्तुष्टा पुष्टिं गर्भस्य साऽऽदधे ॥२९७॥
सा व्यतीतेषु पूर्णेषु मासेषु दिवसेष्वपि ।
स्वोच्चस्वक्षेत्रसंस्थेषु ग्रहेषु निखिलेष्वपि ॥२९८॥
जयन्तमिव पौलोमी सुखेन सुषुवे सती ।
सूनुमन्यूनपुण्याढ्यं दीपयन्तं दिशो रुचा ॥२९९॥ [युग्मम्]
फुल्लगल्लैः सौविदल्लैर्दासीभिश्च प्रमोदितः ।
गत्वा स्पष्टमवर्धिष्ट भूपतिः सुतजन्मना ॥३००॥
वर्धापकेभ्यो विविधाः प्रसादा ददिरेऽमुना ।
असुभ्योऽपि वसुभ्योऽपि यत्सुतो जगतोऽधिकः ॥३०१॥
विपक्षा अपि यज्जन्माकर्ण्य हर्षमुपाययुः ।
युद्धश्रद्धां प्रवृद्धः सन्नसौ पूरयितेति नः ॥३०२॥
आयुर्घृतमिति प्रोक्तं गुडमाधुर्यमप्यतः ।
ददौ गुडाज्ये पुत्रायुर्वृद्ध्यै लोकाय भूमिपः ॥३०३॥
मृत्तिकामातृकापाठं पठद्भिर्बालकव्रजैः ।
समं समेत्योपाध्याय(या)राजानं तुष्टुवुर्गुणैः ॥३०४॥
उपायनान्युपादाय राजलोकानुपागतान् ।
पौरांश्च पूजयामास तुष्टिदानैर्नृपोऽखिलान् ॥३०५॥
मुमोच कारागारेभ्यो बन्दिनो बन्दिनोऽपरान् ।
भृशं नृपोऽनुजग्राह समुदानिय(मुपायनि)तैर्धनैः ॥३०६॥
प्रतिहट्टं प्रतिगृहं नागरैरुद्वृत्तैर्ध्वजैः ।
पुत्रजन्मोत्सवे हर्षान्नृत्यतीव पुरं तदा ॥३०७॥
दीयमानं(न)महादानं नृत्यत्पादकुलाकुलम् ।
कर्पूरक्षोदमेव(द)स्वि प्रमोदकुसुमोत्करम् ॥३०८॥

मिथःप्रदत्तताम्बूलमुल्लूलध्वनिबन्धुरम् ।
उल्लसत्पुलकं हल्लीसकसंस्थमहल्लकम् ॥३०९॥
नृत्यद्वाराङ्गनावारहाराद् गलितमौक्तिकैः ।
विन्यस्तस्वस्तिकमिव कुङ्कुमार्द्रमहीतले ॥३१०॥
विहितोदारशृङ्गारभूषणस्त्रैणमीदृशम् ।
दशाहानि विशामीशः सूनुजन्मोत्सवं व्यधात् ॥३११॥
[चतुर्भिः कलापकम्]
विशुद्धौ सूतकस्याथ कृतायां स्वकुलस्थितौ ।
सुवासिनीभिर्विदधे पितुः सूनोश्च मङ्गलम् ॥३१२॥
निमन्त्र्य गोत्रि-मित्रादिस्वजनान् विविधाशनैः ।
भूपालो भोजयामास भक्त्याऽसावात्मना समम् ॥३१३॥
भुक्तोत्तरमथाराध्य ताम्बूल-वसनादिभिः ।
स्वजनान् प्राञ्जली राजोवाच वाचं सुधामुचम् ॥३१४॥
यदस्य पुत्रे गर्भस्थे मात्रा शंखो हरेः करात् ।
प्राप्तस्तेनास्य नामास्तु शंखो भवदनुज्ञया ॥३१५॥
एवमस्त्विति तैरुक्ते प्रीतचित्ता पितृष्वसा ।
शिशुशीर्षेऽक्षतक्षेपपूर्वं नाम चकार तत् ॥३१६॥
सकाम इव धात्रीभिर्विषयेच्छाभिरन्वहम् ।
पञ्चभिः पोष्यमाणोऽसौ स्वक्षेत्रोपचयं दधौ ॥३१७॥
पिता स्वमङ्कमारोप्य सिञ्चन्प्रीतिरसैः सुतम् ।
सहेलं लालयामास कल्पवृक्षं सुमेरुवत् ॥३१८॥
संचचारेष्वेष प्रति तदा भूपसुता नृपम् (?) ।
क्षणे क्षणे राजसूनुः पुपेवान्यान्यरादिषु ॥३१९॥
माता तमुक्त्वाऽऽशिश्लेष स्तन्यपानोत्सुका(कं)तुकम् ।
तदा(दाऽऽ)स्यमधुपानोद्यन्मूर्च्छाढ्या किन्तु नास्मरन् ॥
द्वितीयेन्दुरिवानन्ददायी देहेन तेजसा ।

परभागमवापासौ कलाभिः प्रतिवासरम् ॥३२१॥
क्रमेण पादचारेण खेलन् घुर्घरकारवैः ।
क्षिपतीव सुरान् क्रीडानभिज्ञान् बालकैः सह ॥३२२॥
पदमंडक-दानादि-क्षौरकर्मादिकाः क्रियाः ।
अकारयत् पिता सर्वा महेन महता सह ॥३२३॥
सवयोभिः सवयोभिः सहितः स्व(स)हितः सदा ।
कुमारः स्वैरमक्रीडत् स्मरवन्माधवादिभिः ॥३२४॥
अथाध्ययनयोग्योऽयमित्यवेत्य सुतं पिता ।
उपाध्यायाय पाठाय ददौ सत्कारपूर्वकम् ॥३२५॥
स्वीकुर्वाणश्च स कलाः सकला अपि तत्क्षणात् ।
सकौतुकमुपाध्यायं चक्रे किं पठितं पुरा ॥३२६॥
कलाविशेषान् सर्वान् यः कुम्भयोनिरिवोदधीन् ।
कृत्वा कण्ठगतानासीदनन्तमहिमास्पदम् ॥३२७॥
हंसोज्ज्वलकलः कण्ठे रेखात्रयमयं दधत् ।
शङ्खः शंख इवोल्लासिसाधुनादोऽभवद् भुवि ॥३२८॥
मुमोच स क्रमाद् बाल्यं सुधीर्मौल्यमिवात्मकम् ।
तादृक्कलावतां यद्वा बालत्वं कुत्र तिष्ठति ॥३२९॥
तदङ्गं यौवनोत्तुङ्गं चङ्गतामभवत्तराम् ।
स्वभावसुभगं स्वर्णं विशिष्योज्ज्वालितं हि तत् ॥३३०॥
मित्रमण्डलमध्यस्थश्चरन्नपि सदाऽद्भुतम् ।
महोदयी राजसूनुर्जज्ञे वक्रगतिर्न तु ॥३३१॥
समुद्र इव गंभीरो धीरो मेरुरिव स्थिरः ।
क्षीरवन्निर्मलयशाः पिकवत् प्रियभाषितः ॥३३२॥
कल्पपादपवद् दाता प्रतापी सवितेव सः ।
गुणैरशेषैरप्येवं वर्णनीयो न चापरः ॥३३३॥ [युग्मम्]
स कदाऽपि गजारूढो गज-वाजि-पदातिभिः ।

भूतः पुरन्दर इव विदधे राजपाटिकाम् ॥३३४॥
कदाचिद् भद्रजातीनां शिष्याणामिव शिक्षणम् ।
चक्रे गजानां जानानो वाजिनामपि तद्व्रतम् ॥३३५॥
कदाऽपि बुधगोष्ठीषु निविष्टः शिष्टसंस्थितिः ।
विदुषां संशयानानां गुरुस्तत्वं गृणन्नभूत् ॥३३६॥
उद्यानयान-सद्गीतिगीति-प्रेक्षणकेक्षणैः ।
प्रीति(त)चित्तः सुखं निन्ये कालं स दिवि देववत् ॥३३७॥
जितस्वर्गसुरीवर्गा अनेका भूपकन्यकाः ।
लक्ष्मीवत्यादिका राजा कुमारेण व्यवाहयत् ॥३३८॥
शंखः सिषेवे विषयान् पञ्चाप्यथ यथासुखम् ।
विवेक्यपि न दूष्येत समयोचितमाचरन् ॥३३९॥
धर्मा-र्थ-कामानभुनक् त्रीनप्येष नृपाङ्गजः ।
क्रमेण वर्षा-शिशिर-ग्रीष्मर्तूरिव हायनः ॥३४०॥
धर्मोऽर्थजनको लोके इत्यसत्यं वचो यतः ।
धर्मस्योत्पादकोऽस्यार्थो दान-देवार्चनादिभिः ॥३४१॥
संचरन्नपि सर्वत्र तत्याज न निजस्थितिम् ।
चित्रं सुखासनस्थोऽसौ भ्रम्यति स्म पुरे मुदा ॥३४२॥
निशि सोऽन्येद्युरेकाकी निर्गतो वीरचर्यया ।
पठ्यमानं श्लोकमेतं केनापि स्म शृणोति सः ॥३४३॥
"यो न निर्गत्य निःशेषां विलोकयति मेदिनीम् ।
अनेकाश्चर्यसम्पूर्णां स नरः कूपदर्दुरः" ॥३४४॥
तदाकर्ण्य ततः प्रीतश्चिन्तयामास चेतसि ।
सत्यं सोऽहं कूपभेको यतेऽतस्तद्दिदृक्षया ॥३४५॥
निश्चित्य चेतसा सोऽथ कस्यापि हि निवेद्य न ।
कृपाणपाणिरेकाकी नगरान्निशि रा(निर्)ययौ ॥३४६॥
न भ्रातुर्न पितुर्मातुर्न स्त्रीणां सुहृदां न च ।

धनस्य नास्मरत् किन्तु वसुधादर्शनस्य सः ॥३४७॥
गच्छतोऽस्य पुरोपान्ते क्षत्रियः कोऽपि विक्रमी ।
विदेशे राजसेवार्थं प्रस्थितः पृष्ठतोऽमिलत् ॥३४८॥
कुमारं प्रणिपत्याथ प्राञ्जलिर्जल्पति स्म सः ।
यानन्यत्रास्मि सेवायै श्रये त्वामेव सुप्रभुम् ॥३४९॥
उदारधीः कुमारोऽपि महासत्त्वशिरोमणिः ।
मित्रत्वेनाश्रयत् तं हि महान्तो नतवत्सलाः ॥३५०॥
अहो राज्यं परित्यज्य निर्ययावेककः पुरात् ।
कुमारः सद्वितीयोऽभूद्भाग्यं जागर्ति यत्सताम् ॥३५१॥
तत्कालमेव मिलितो(तौ)निर्मलौ क्षीरनीरवत् ।
आसावैक्यमतः प्रीतेः क(का)रणं शुद्धचित्तता ॥३५२॥
मिथः पथि कथाः प्रौढाः कुर्वन्तौ तौ प्रचेलतुः ।
भूवीक्षाकौतुकेनाहो दिवो देवाविवागतौ ॥३५३॥
सपादयामसमये ग्राममेकमुपागमत् ।
समित्रः कुत्रचिद् भेजे छायामायासशान्तये ॥३५४॥
तावता ग्रामतः कोऽपि कुटुम्बी बहिरागतः ।
कुमारं स्मरमध्यक्षं समाधवमिवैक्षत ॥३५५॥
प्रणम्य प्राञ्जलिः प्रोचे स कुमारमुदारधीः ।
मद्गृहं स्वपदस्पर्शन्(र्शात्) कुरु कल्याणभाजनम् ॥३५६॥
दाक्षिण्य-दक्षिणाक्षिस्थस्पन्देरितमनाः क्षणात् ।
समुत्थाय समं तेन ससुहृत् तद्गृहं ययौ ॥३५७॥
ततः स्नाना-शनाद्याश्च प्रतिपत्तीर्विधाय सः ।
कुमारस्य पुरः स्वीयां श्रीमतीमानयत् सुताम् ॥३५८॥
व्याजिज्ञपच्च संयोज्य पाणी प्राणितवन्मम ।
कृतार्थय सुतां स्वामिन् ! स्वपाणिग्रहणादिमाम् ॥३५९॥
मधुभ्रूपल्लवोल्लाससंहितोऽथ सखाऽवदद् ।

अज्ञातकुलशीलाय किमस्मै दीयते सुता ॥३६०॥
संचरन्ति यतो धूर्ताः प्रच्छन्नं जगतीतले ।
तन्माऽस्मै तनया(यां)देहि काकाय इव कोकिला[म्] ॥३६१॥
स प्राह भवता सुज्ञेनाज्ञेनेव किमुच्यते ।
लब्ध्वा सद्गुणमाणिक्यं तत्कुलं को विलोकयेत् ॥३६२॥
गुणाः स्वयंप्रकाशाः स्युर्दृष्ट एव सुवस्तुनि ।
घनसारः कथं सारः सुरभिः स्यात्परीक्षणात् ॥३६३॥
ततो वदान्य ! मान्योऽयं नूनं मे पार्थनाविधिः ।
यतस्तत्सफलीकारः सतां हि प्रथमं व्रतम् ॥३६४॥
प्रत्युत्तरमदत्त्वाऽसौ कुमारस्तमनस्यत (?) ।
उचितं रुचितं वस्तु कः सुधीस्त्यक्तुमिच्छति ॥३६५॥
कुटुम्बी डम्बरेणाथ तेनैतां पर्यणाययत् ।
पार्वतीमीश्वरेणैव हिमालय इवाचलः ॥३६६॥
तया सह सुखं स्वैरमुपभुज्य दिनद्वयम् ।
तामनुज्ञाप्य सोऽचालीत् पुरो देशादिदृक्षया ॥३३७॥
श्रीमतीदत्तपाथेयः कुमारः पथि संचरन् ।
विखिन्नः स्निग्ध-सच्छायं वटं बन्धुमिवैक्षत ॥३६८॥
उष्णे शीता हिमे तप्ता छाया यस्य सुखावहा ।
कान्ता-नग-पटीतुल्या तं वृक्षं स समाश्रयत् ॥३६९॥
मित्रदत्तासनो यावत् कुमारस्तत्र तिष्ठति ।
तावद्वटस्थो यक्षः प्रत्यक्षो वाचमूचिवान् ॥३७०॥
अहो मदाश्रये कस्त्वं कस्यादेशेन तस्थिवान् ।
गच्छ स्वच्छ ! ततः शीघ्रं विजिगीषति चेद् भवान् ॥३७१॥
तदाकर्ण्य कुमारोऽपि गोपितोत्कर्षविप्लवः ।
प्राह च्छायार्थिनावावां वृक्षमेतमुपागतौ ॥३७२॥
वेधसा तरवः सृष्टाः सर्वस्योपकृतेः कृते ।

पथि स्थि(तो)विशेषेण स्वामीयसि ततोऽसि किम् ॥३७३॥
पादपा जलदा नद्यः सूर्याश्चन्द्रमरीचयः ।
स्वयं सदोपकुर्वाणा नाप्नुवन्ति परेशताम् ॥३७४॥
तत्त्वं मृथा किमात्मानं विगोपयसि वारयन् ।
मंत्री भवन्ननापृष्टः परवेश्मनि मूढवत् ॥३७५॥
प्रत्यक्षीभूय यक्षोऽपि बभाषे परुषाक्षरम् ।
रे रेऽनात्मन्य(ज्ञ !)मां वेत्सि न किं स्वामिनमस्य हि ॥३७६॥
तदात्मानं विजानीहि सम्प्रत्येव हि(य)मातिथिम् ।
प्रत्युत्तरयसे यन्मे तदिष्टं स्मर दैवतम् ॥३७७॥
विहस्याह कुमारस्त्वं देवजात्यैव वलासि (?) किम् ।
न वेत्सि सतां पुंसां किं करन्ति सुरा अपि ॥३७८॥
खड्ग एव क्षत्रियाणामिष्टदैवतमुच्यते ।
करगोचरमेवैतन्नित्यं तन्मे पुरो भव ॥३७९॥
सावष्टम्भगिरा तस्य विज्ञायासमसाहसम् ।
यक्षः प्राहोल्लसत्प्रीतिस्फीतदन्तावलिद्युतिः ॥३८०॥
स्वामिंस्त्वत्साहसक्रीतः प्रीतस्ते दर्शनादपि ।
सम्पन्नः सेवकीभावमन्वहं स्यां तवानुगः ॥३८१॥
राजसूनुरपि प्राच्यसंस्तुतमिव[त]त्सुरम् ।
प्रीत्या प्रसादयामास सन्तः सार्द्रहृदो यतः ॥३८२॥
क्षणं विश्रम्य भुक्त्वा च पुरस्तरुतलादसौ ।
ईश्वरो नन्दि-चन्दिभ्यामिव ताभ्यां सहाचलत् ॥३८३॥
व्योमाध्वना व्रजन् यक्षः कुमारस्य दृशो मुदे ।
विधाय विविधाश्चेष्टाः साश्चर्यं च मनो व्यधात् ॥३८४॥
यथा पान्थो रथारूढः ससियन्नस्ति कश्चन ।
यक्षेणालक्षिता तस्यापहृत्य दयिता कृता ॥३८५॥
विलपन्नाकुल पान्थः कुमारस्यापतत्तदा ।

देव ! केनाप्यलक्ष्येणापहृता मम वल्लभा ॥३८६॥
स विहस्याह भो क्लीव ! जायामपि न रक्षसि ।
याति मस्तकशून्यानां राज्यं वाऽत्र किमद्भुतम् ॥३८७॥
प्रत्यक्षीभूय यक्षोऽपि प्रोचे स्वामिन्नसौ द्रुतम् ।
लभते स्वप्रियां चेत्ते रथं यच्छेत् सशस्त्रबलम् ॥३८८॥
कार्यं रथेन मे नास्य प्रियां शीघ्रं समर्पय ।
कुमारेणेति गदिते यक्षस्तां प्रकटां व्यधात् ॥३८९॥
वल्गितं वीक्ष्य यक्षस्याचिन्तयच्चेतसि स्फुटम् ।
कुमारः कौतुकायासौ मिलितो मम नाटकी ॥३९०॥
पुनः स्वामिविनोदार्थं पथि काश्चिद्गतांशुकाः ।
विलूनमूलि(र्ध)जाः काश्चिद् यक्षश्चक्रे नितम्बिनीः ॥३९१॥
रथं व्य(वि)धाय धौरेयमुक्तं पान्थस्य कस्यचित् ।
धुर्यौ(र्यौ)विनापि वेगेन यक्षो यान्तमदर्शयत् ॥३९२॥
पथः खेदापनोदाय कुमारस्य स यक्षराट् ।
चेष्टा विचक्रे विविधाः सुभक्त इव सेवकैः(कः) ॥३९३॥
तत्कृतैः कुतुकैरेवमजानानः श्रमं क्वचित् ।
कुमारः ससहायोऽपि प्राप रत्नपुरं पुरम् ॥३९४॥
विशन् सोऽपि पुरेऽश्रौषीद् राजसूर्डिडिमध्वनिम् ।
हितवाक्यमिव श्रोतुं सद्यः श्रोत्रमसज्जयत् ॥३९५॥
नृपवल्लभभूपालपुत्रीं मदनसुन्दरीम् ।
गृहीत(ता)मुग्रदोषेण बकेन शफरीमिव ॥३९६॥
उन्मोचयति यस्तस्य राजा यच्छति वाञ्छितम् ।
अर्थं श्रुत्वेति यक्षोक्तः शंखो डिण्डिममस्पृशत् ॥३९७॥
[ युग्मम् ]
निन्ये पाटहिकेनाऽसावुपभूपं स भूपभूः ।
विहितस्वागतो राज्ञा स्वासन्नमु(मौ)पवेशयत ॥३९८॥

शंखं वीक्ष्य नृपो दध्यावो(वे)कोऽयं दस्रयोर्दिवः ।
किमियाय तनूजायाः सौस्थ्यसम्पादनाय मे ॥३९९॥
सप्रश्रयं नृपोऽथाह महाभाग ! ममाङ्गजाम् ।
गामिवेभारिणाऽऽक्रान्तां दोषग्रस्तां विमोचय ॥४००॥
न स मन्त्रो मान्त्रिकाणां न स तन्त्रोऽस्ति तन्त्रिणाम् ।
न सा विद्या सविद्यानां भिषजां न च भेषजम् ॥४०१॥
किं चान्यदपि तन्नास्ति सुतीर्थे विहितं न यत् ।
परं व्यर्थमभूत् सर्वं खलोपकरणं यथा ॥४०२॥ [युग्मम्]

किञ्चिदालोच्य यक्षेण शंखोऽऽङ्गीकृतवानथ ।
राज्ञा सोऽन्तःपुरं निन्ये सुता यत्रावतिष्ठते ॥४०३॥
चन्दना-गुरु-कर्पूर-कस्तूरी-कुंकुमादिभिः ।
अभ्यर्च्य मण्डलं तत्र राजसुतां न्यवेशयत् ॥४०४॥
ध्यानमापूर्य नासाग्रन्यस्तदृष्टिरनाकुलाः(लः) ।
तस्थौ मन्त्रं स्मरन् यद्वा सर्वत्राडम्बरो जयी ॥४०५॥
शंखस्तदानीं शुद्धोऽपि हृदि कौटिल्यमुद्वहन् ।
प्रियंवदोऽपि किन्त्वत्र निन्ये स्वं नामसत्यताम् ॥४०६॥
सद्वंशजस्य चापस्य गुणस्यास्याथवा यथा ।
वक्रता कार्यकाले स्यान्निन्द्या नैव तथाऽस्य हि ॥४०७॥
दोषोऽथ वपुषस्तस्या यक्षशक्त्या झट(टि)त्यपि ।
पलायत(यितः) यतः सन्ति बलिभ्योऽपि बलाधिकाः ॥
विधुन्तुदेनेव विधोमूर्तिर्दोषेण सा तथा ।
विमुक्ताऽऽदित्योदिते द्युत्या किंचाधिकवपुःश्रिया ॥४०९॥
पितृ-मात्रादिवर्गस्तां विमार्ग्याथ निरामयाम् ।
पुनर्जातामिव सुतां मेने मदनमञ्जरीम् ॥४१०॥
तदैव पितरौ प्रीतौ गुणग्राह्योऽयमेवहि ।
वरोऽस्त्वस्या विचिन्त्येति कुमारं प्रत्यजल्पताम् ॥४११॥

यथा कृतार्थीकृतवान् दर्शनेन दृशौ हि नौ ।
तथाऽपि पाणिग्रहणेम(ना)स्मत्पुत्रीं कृतार्थय ॥४१२॥
किंगुणः किंकुलः कोऽयमिति यस्य न निर्णयः ।
वराय तस्मै नात्मीया सुता देया कदाचन ॥४१३॥
इति शंखवचः श्रुत्वा भूपः प्राह धियां निधे ! ।
प्रत्यक्षेणोपलब्धेऽर्थे कोऽनुमानं निरीक्षते ॥४१४॥
तद् ( त्वद् )गुणाधारगेहेन देहेनैव तवाखिलम् ।
कुलादि विदितं तन्मां माऽवमंस्था मनागपि ॥४१५॥
प्रतिपन्नमिदं ज्ञात्वा तन्मौनादथ भूपतिः ।
शुभेऽहनि महेनैतामुदवाहयदात्मजाम् ॥४१६॥
सुखं सिषेवे स यथा स्वेच्छं विषयजं ततः ।
दिनानि कतिचित् तत्र शंखः कन्दर्पदर्पतः ॥४१७॥
भूयो देशदिदृक्षोक्षा(त्क) स्तामनुज्ञाप्य सोऽग्रतः ।
ययौ ताभ्यां समं यद्वा स्थिरः पवेः क्वचिन्न हि ॥४१८॥
व्रजन् क्वापि वने सायमायासापह्नवाय सः ।
तस्थौ स्वस्थमना मित्रकलत्रपल्लवप्रस्तरः ॥४१९॥
निशीथेऽथ समासन्नं ज्वलज्ज्वालमुदर्चिषम् ।
वीक्ष्य यक्षं समादिक्षत् तन्मूलोत्पत्तिवित्तये ॥४२०॥
शीघ्रं यक्षोऽपि विज्ञाय कुमाराय व्यजिज्ञपत् ।
साधयन् विद्यते विद्यां देव ! कोऽप्यत्र सिद्धराट् ॥४२१॥
तस्य चित्रकवल्लीव तदधिष्ठायकामरी ।
आयास्यतोऽपि नायाति निर्भाग्यस्य दृशोः पथम् ॥४२२॥
सोऽशक्तोऽपि परं देवसाहाय्यात्साधयिष्यति ।
विद्यामनूरुवद् भानुस्वीकृतेः खान्तसङ्गतिम् ॥४२३॥
दिष्ट्या करिष्ये साहाय्यं स्वदेहव्ययतोऽप्यहम् ।
इत्यूचे भूपभूर्येष्ठाऽन्यार्थे सृष्टिः सतां सदा ॥४२४॥

जगाद योगिनं गत्वा कुमारोऽपि रयादिदम् ।
अहो सहाये निर्भीको मयि स्वार्थं समापय ॥४२५॥
इत्युदित्वाऽसिमादाय तत्समीपमवस्थिते ।
शंखे योगी महाविद्यां ध्यायति स्म समाधिना ॥४२६॥
क्षणेन क्षणदाकालः पुरः काल इवापरः ।
प्रादुरासीदासिकरः कोऽप्यधृष्यो निशाचरः ॥४२७॥
शंखमाक्षिप्य सोऽवोचद् भ्रुकुटीभङ्गभीषणः ।
किमनात्मज्ञ ! संचिन्त्य भवानिह समागतः ॥४२८॥
अहमेनं हनिष्यामि योगिनं याहि तद् द्रुतम् ।
मा मुधा रजकस्थाने मृत्युं खरम(अ)वाप्नुहि ॥४२९॥
स प्राह साहसी हंहो मयि सत्यस्य रक्षके ।
नालमाखण्डलोऽपि स्यात् प्रतिकर्तुं तु को भवान् ।४३०॥
तदाकर्ण्योल्लसद्रोषात् दोषाचरवरो नु तम् ।
दध्यावे खड्गमुद्यम्य देवेन्द्रमिव दानवः ॥४३१॥
शंखः सिंह इवाभीको निस्त्रिंशं नर्तयन् मुदा ।
निशाचरं द्विपमिव प्रति हन्तुमढौकत ॥४३२॥
यावद् व्यापारयत्युग्रं मण्डलाग्रं निशाचरः ।
तावदाहत्य खड्गेन खड्गं तस्य द्विधाऽकरोत् ॥४३३॥
पलादोऽप्यसिमुत्सृज्य तं भुजाभ्यामपीडयत् ।
त्यक्तासिः सोऽपि तं दोर्भ्यामादायादयमाश्लिषत् ॥४३४॥
वनेभाविव युद्ध्यन्तौ तौ सुहृद्-यक्ष-योगिनाम् ।
भय-विस्मय-हर्षादिरसहेतू बभूवतुः ॥४३५॥
पादबन्धाद् बाहुबन्धान्मुष्टिघातात् परस्परम् ।
भूमिलु[ठ]नतो मल्लाविव तौ श्रममापतुः ॥४३६॥
शंखोऽपि लब्धलक्षत्वाल्लब्ध्वाऽवसरमात्मनः ।
धृत्वा पदे तं परितो मौलेरभ्रमयत् क्षणम् ॥४३७॥

संहृत्य राक्षसं रूपं दिव्यदेहद्यु(ता)दिशः ।
द्योतयन्ती प्रादुरासीदथ विद्याधिदेवता ॥४३८॥
उवाच वत्स ! विद्याधिदेवताऽस्मि समाचरम् ।
नैशाचरमिदं रूपं तव सत्त्वं परीक्षितुम् ॥४३९॥
जात्यं स्वर्णमिवानर्घ्यं सत्त्वं ते सात्त्विकाग्रणीः ।
तेन तुष्टाऽस्मि तच्छीघ्रं वाञ्छितं च पुनः सूरी ॥४४०॥
प्रार्थयस्वार्थमप्यन्यत् किञ्चिद्वत्स ! ततोऽब्रवीत् ।
कुमारो देवि ! समये स्मृताऽऽगच्छेर्ममान्तिकम् ॥४४१॥
ओमित्युक्त्वा तिरोऽधत्त साथ योग्यपि भूपजम् ।
उत्थाय सस्वजे स्वार्थपूर्तिस्फूर्त्योल्लसन्मनाः ॥४४२॥
त्वत्प्रसादादियं सिद्धिर्महाभागाभवन्मम ।
यश्चन्द्रकान्तादमृतद्रुतिस्तच्चन्द्रवालितं( वर्तितम् ) ॥४४३॥
इत्यादिस्तुतिभृद् योगी कुमाराय बलादपि ।
अदत्त गुटिकामेकामदृश्यीकारकारणम् ॥४४४॥
गृहीत्वा गुटिकां गोष्ठ्या सिद्धेन सह शर्वरीम् ।
अतिवाह्य प्रगे शंखः पुरोपान्तमुपागतः ॥४४५॥
क्वचित् कोलाहलाकीर्णं लोकमालोक्य पिंडितम् ।
कुमारः कौतुकी तत्र मित्र-यक्षयुतो ययौ ॥४४६॥
अपश्यच्च तदन्तःस्थं शकटं कर्कटीभृतम् ।
तत्समीपस्थितं कंचिद् वणिजं च धनेश्वरम् ॥४४७॥
अथ कञ्चिन्नरं शंखोऽप्राक्षीत् भो ! किमयं वणिक् ।
चिर्भटीविक्रयायोग्यो वीक्ष्यते तटसंस्थितः ॥४४८॥
नरः प्राह महाभाग ! धनेन धनदो ह्ययम् ।
सार्थेशः क्रीडयाऽऽदाय चिर्भटीः प्रोचिवानिदम् ॥४४९॥
योऽत्ति सर्वा इमा एकस्थानस्थः कर्कटीः पुमान् ।
ददामि तस्य दीनारलक्षमेकमनूनकम् ॥४५०॥

परं न कोऽप्यलंभूष्णुः कर्तुमेतश्च दुष्करम् ।
लोकस्तद्गुण(त्त)रुच्छाया इव भ्रमति पार्श्वतः ॥४५१॥
सार्थेशवचनं शंखः प्रतिज्ञायेति कर्कटीः ।
जघास ग्रासवत् सर्वा यक्षशक्त्यैकहेलया ॥४५२॥
सिद्धोऽयं किमु देवोऽयं खेचरोऽयं किमीदृशैः ।
चरितैश्चित्रकृन्नूनं सामान्योऽयं न मानवः ॥४५३॥
स्तूयमानो जनेनेति कुमारोऽभ्यर्थ्य सादरम् ।
सार्थाधिपतिना सद्यः स्वीयं गेहमनीयत ॥४५४॥
विविधैरशनैः पानैर्भोजयित्वा सगौरवम् ।
उपानीय पुरः पुत्रीं प्राञ्जलिर्जल्पति स सः ॥४५५॥
देवाद्य नन्दिनीयं मे त्वद्भार्याभावमीयुषी ।
कृतार्थास्त्विति किं चास्यास्त्वद्दाने शृणु कारणम् ॥४५६॥
पुरेऽत्र सागराह्वोऽहं वणिक् दारिद्र्यमन्दिरम् ।
मरौ कल्पलतेव मद्गृहेऽजायतात्मजा ॥४५७॥
आजन्म दिवसादस्या भाग्येनाकस्मिकैर्धनैः ।
अचिरेणागतैः पूर्णा(र्णोऽ)भूवं सर इवोदकैः ॥४५८॥
रूपेणास्त्र(स्त)सुरस्त्रैणा सर्वाङ्गीणसुलक्षणा ।
मनो रमयतीत्येषा लोकैरुक्ता मनोरमा ॥४५९॥
प्रवर्धमाना सकला अध्यगै(गी)ष्ट कला अपि ।
क्रमेण प्राप सा चारुतारुण्यचतुरं वयः ॥४६०॥
वीक्ष्येमां यौवनप्राप्तां वरचिन्तामहोदधौ ।
मज्जन्नवापमात्मीयगोत्रदेवीमहातरीम् ॥४६१॥
तयैवाश्रितया शीघ्रमादिष्टोऽस्या वरो भवान् ।
त्रपुषीभक्षणं चाभिज्ञानं वरपरीक्षणे ॥४६२॥
तदेनां पुण्यसम्प्राप्तां पुत्रीमुद्वह मामकीम् ।
पटी तवोच्छीर्षके सावृते कर्तनपि जले (?) ॥४६३॥

श्रुत्वेति कुमारे मौनं श्रिते तां सागरः सुताम् ।
महेन महता तेन व्यवाहयदमूढधीः ॥४६४॥
मनोरमा मनस्तस्य यावत्किञ्चिदपाहरत् ।
तावद्देशदिदृक्षाऽपि कटाक्षीकुरुते स्म तम् ॥४६५॥
प्रकाश्य स्वेप्सितं तस्यै समित्रोऽथ पुरोऽचलत् ।
यद्विशेषातिदेशोहि प्रकृतं नैव बाधते ॥४६६॥
प्राप प्रियंवदजनां स क्रमात् मिथिलां पुरीम् ।
याऽग्निमुखेभ्यो भीतेवाभ्यागता स्वःपुरी भवम् ॥४६७॥
जितारिस्तत्र भूपालपालिलालितशासनः ।
भूपतिः कुरुते राज्यं प्राज्यं स्वर्गसमर्द्धिभिः ॥४६८॥
तस्यास्ति सुन्दरी नाम्ना पट्टदेवी पतिव्रता ।
यस्याः शीलोष्मणा प्लुष्टः किञ्चिच्छ्यामोऽभवच्छशी ॥४६९॥
तत्कुक्षिसरसीहंसी सुताऽऽस्ते रतिसुन्दरी ।
यद्रूपसम्पदं द्रष्टुं शक्तो जज्ञे सहस्रदृक् ॥४७०॥
विद्यया वाक्यदेवीव कामकान्तेव रूपतः ।
सौभाग्येन रमेवासौ क्रमेण प्राप यौवनम् ॥४७१॥
कुतश्चित्कारणाज्जज्ञे नरविद्वेषिणी तु सा ।
पाणिपीडननामापि न सहे स्वस्य तत्तदा ॥४७२॥
विवाहमीहते नैव त्वत्कीर्त्यै पितृगेहगा ।
भवेत् किं तर्हि कुर्वेऽहं कं श्रये यामि कुत्र वा ॥४७३॥
इति चिन्तापगापूरप्लावनोऽदृष्टचेतनः ।
अश्नाति न न निद्राति दुःखार्त इव भूपतिः ॥४७४॥
तच्चिता(त्त)व्यग्रताहेतुं पौराणां जल्पतां मिथः ।
आकर्ण्य भूपभूर्जज्ञे सद्यस्तद्दर्शनोन्मनाः ॥४७५॥
मन्त्रयित्वाऽथ यक्षेणादृश्यो गुटिकयाऽभवत् ।
तेन दर्शितमार्गोऽसौ कन्याऽन्तःपुरमाविशत् ॥४७६॥

विलोक्यानन्यरूपां तां दध्यौ हृदि नृपाङ्गजः ।
हित्वाऽनङ्गं पतिं नूनमत्रेयं रतिसुन्दरी ॥४७७॥
यक्षः शक्त्या शुकीभूय मणिकण्ठविभूषणः ।
पक्षाक्षेपभृदागत्य कुमारीपुरतः स्थितः ॥४७८॥
यावत् सा तं भद्रजात्यं कीरं राजसभावरम् ।
वीक्ष्याक्षेपेण चिक्षेप पाणिं तद्ग्रहणेच्छया ॥४७९॥
तावन्नरगिरा प्राह शुको भूपभवे ! कथम् ।
पुरुषद्वेषिणी भूत्वा नरमास्प्रष्टुमीहसे ॥४८०॥
किं च ते पुरुषद्वेषदोषदूषितवर्ष्मणः ।
स्पर्शोऽपि न शुभो यस्मात् सर्वथा कुष्ठिनो यथा ॥४८१॥
सस्मितं स्माह भो कीर ! युक्तं नोक्तं त्वया यतः ।
न गुणद्वेषिणी तत् स्यां किमुपालम्भभागहम् ॥४८२॥
सन्ध्याभ्रसमरागेषु निःस्नेहेष्वदयेषु च ।
नरेषु गुणलेशोऽपि कीर ! कोऽपि न दृश्यते ॥४८३॥
प्रति तृणानीं(नि)निक्षिप्य मुखं यात्यन्यतो वृषः ।
तथा नारी नरस्त्यक्त्वा तत्किमन्तरमेतयोः ॥४८४॥
सोपहासं शुकः प्रोचे धिक् त्वां कूटविचक्षणाम् ।
यदेकस्य हि नैर्गुण्याज्जातिं दूषयसे नृणाम् ॥४८५॥
अश्वश्चेवूकलः कश्चित् तद्वदुच्चैःश्रवाः कथम् ।
सर्पेषु गोनसोऽस्त्येकः शेषो भूद्धारकृत् परः ॥४८६॥
नैव तदेकहीनत्वे जातिर्दूष्या विपश्चिता ।
यन्नेक्ष्यन्ते समगुणास्त्वद्देहेऽवयवा अपि ॥४८७॥
तत्स्वदेहाङ्गवैषम्यमर्मं वीक्ष्य विचारय ।
न पिता न सुतः सोऽस्ति यो मिथः सदृशैः गुणैः ॥४८८॥
यथा वल्ली विनाऽऽधारं कौमुदी शशिनं विना ।
न नन्दति तथा नारी मुग्धे ! काऽपि पतिं विना ॥४८९॥

पत्याश्रयं विना नारी सगुणाऽपि न शोभते ।
मुक्तस्रगिव भूभ्रष्टा स्त्रीकण्ठलुठनोचिता ॥४९०॥
न भ्राता न पिता तद्वत् स्त्रीणां स्यात् स्वार्थपूरकः ।
यद्वत् पतिर्जीवलोके नदीनामिव वारिदः ॥४९१॥
तद् भद्रे ! पुरुषद्वेषदोषाग्रहममुं त्यज ।
दुर्लभं मानुषं जन्म लब्ध्वा हारयसे कथम् ॥४९२॥
श्रुत्वेति कुमरी प्राह यदुक्तं म(मे)शुक ! त्वया ।
परं तु नरनैर्गुण्यं मया प्रत्यक्षमीक्षितम् ॥४९३॥
यथा पूर्वभवे नन्दिग्रामेऽभूत्सद्धडो द्विजः ।
तस्याहं गेहिनी नन्दाऽभूवं शुद्धकुलोद्भवा ॥४९४॥
भुक्ते भुक्तवती पत्यौ सुप्ते सुप्ता स्थिते स्थिता ।
कायच्छायेव सर्वत्राभूवं तदनुगामिनी ॥४९५॥
कदाचित्तत्र दुर्भिक्षं लोकस्याभाग्यतोऽभवत् ।
अमातृपुत्रको यत्र जनोऽजायत दुःखितः ॥४९६॥
अथ लोकः क्षुधाक्रान्तः कोऽपि क्वापि ययौ ततः ।
यियासुर्मत्प्रियोऽप्यासीन्मां विहायान्यनीवृति ॥४९७॥
मयाऽभाणि प्रिय ! तु मां हित्वा किं गन्तुमर्हसि ।
न द्विजिह्वात्परः कोऽपि प्रियां कञ्चुलिकां त्यजेत् ॥४९८॥
इत्यादियुक्तिभिः सूक्तैश्चोक्तोऽनिच्छन्नपि प्रियः ।
मयाऽन्वयायि यत्सन्ध्या न याति न रविं कथम् ॥४९९॥
व्रजन्नरण्यमन्येद्युरनुरागवतीं सतीम् ।
मुक्त्वा सुप्तां निशि क्वापि ययावेकाकिनी स माम् ॥५००॥
सुप्तोत्थिताऽपि नापश्यं यावत् क्वचिदपि प्रियम् ।
पपात तावत्सहसा भूमौ भग्नेव वल्लरी ॥५०१॥
मूर्च्छाऽपगमे व्यलपं भ्रातस्तातेति हा प्रिय ! ।
मामनाथामरण्यानीमध्ये मुक्त्वा कथं गतः ॥५०२॥

यूथभ्रष्टा कुरङ्गीव सार्थभ्रष्टेव सुन्दरी ।
अहं भ्रान्ताऽस्म्यनालम्बा चतुर्दिक्षु प्रियेक्षिणी ॥५०३॥
कुत्रापि वीक्षितं(तुं) चित्तेऽचिन्तयं निश्चितं प्रियः ।
मुक्त्वा मां प्रस्थितोऽन्यत्र यत्पुराप्युक्तवानिदम् ॥५०४॥
ध्यात्वेति स्थानकं किञ्चिल्लक्ष्यीकृत्य प्रतस्थुषी ।
क्षुधार्ता पञ्चभिर्ग्रासैर्ग्राममेकमवाप्नुवम् ॥५०५॥
भिक्षां भ्रमन्ती ग्रामेऽहं दृष्ट्वा साध्वीरुपाश्रये ।
गत्वा प्रणम्य चाश्रौषं तदन्ते धर्मदेशनाम् ॥५०६॥
पूर्वं पतिपरित्यागदुःखोत्कर्षकषायिते ।
मच्चित्ते निविडो धर्मरागो वस्त्र इवालगत् ॥५०७॥
दीक्षामादाय तत्पार्श्वे परिपाल्य कियच्चिरम् ।
विपद्य मन्दिरे राज्ञो जज्ञेऽहं रतिसुन्दरी ॥५०८॥
यौवनाभिमुखी यावत् तावद्वातायनस्थिता ।
व्रजन्ती राजमार्गेऽहं जातु साध्वीरलोकयत् ॥५०९॥
जातं तद्दर्शनाज्जातिस्मरणं तत्क्षणान्मम ।
स्मृत्वा तत्पतिवैयात्यं पुरुषद्वेषमागमम् ॥५१०॥
तदहं नरवैगुण्यं दृष्ट्वैवाभवमीदृशी ।
न गुणद्वेषिणी किन्तु गुणाः पूज्या यतः सताम् ॥५११॥
शुकोऽवादीद् निर्गुणः स सत्यं पूर्वभवप्रियः ।
तत्रैव द्वेषमुत्कर्षं नयन्ती युक्तमञ्चसि ॥५१२॥
परं भीरु! रणाद् भीरुर्यदि कोऽपि पलायितः ।
ततोऽन्यः सुभटः शूरो राज्ञा नाद्रियते किमु ॥५१३॥
तथैकदा हृतश्चौरैः पथि पान्थः कश्चिद् व्रजन् ।
तत्रान्येन न गन्तव्यं निजकार्योर्थिना किमु ॥५१४॥
सूक्तैः शुकस्य साकूतैरुद्यत्प्रमदमेदुरा ।
उवाच कुमरी कीर! न सामान्यगुणो भवान् ॥५१५॥

तद् ब्रूहि कस्य भूपस्य भूपपुत्रस्य वा पुनः ।
कस्या वा भूपपत्न्यास्त्वं शुक ! प्राणप्रियोऽभवः ॥५१६॥
शुकोऽथ प्राह सोत्साहं शृणु श्रोत्रसुखावहम् ।
यस्य नामापि मांगल्यं स स्वामी मम सुन्दरि ! ॥५१७॥
कोऽसाविति तयोक्ते स प्राह रत्नपुरे पुरे ।
नृपो नरोत्तमस्तस्य शंखोऽस्ति कुमरो वरः ॥५१८॥
यः सोमोपि न दोषाश्रीः शूरोऽपि न हि तापनः ।
ईशोऽपि न त्रिरूपाक्षो जिष्णुर्यो न जनार्दनः ॥५१९॥
किरीट्यपि न बीभत्सो रामोऽपि न हलायुधः ।
इन्द्रोऽपि न दुश्र(श्च्य)वनः सोऽयं क इव वर्ण्यते ॥५२०॥
चङ्गं यदङ्गं संवीक्ष्य स्वीयरूपप्ररूपणात् ।
यस्मिन् विरक्तोऽनङ्गत्वं भेजे कामस्तदाद्यतः ॥५२१॥
यत्खड्गदण्डे निवडे(विडे) शक्तिशृङ्खलया जिता ।
सततं स्थिरतामाप चपलाऽपि हरिप्रिया ॥५२२॥
यो नीरनिधिगम्भीरः क्षीरोज्ज्वलयशःकलः ।
क्षमाभारसमुद्धारालंकर्मीणभुजाबलः ॥५२३॥
वदान्यः सर्वमान्यश्चानन्यसामान्यसद्गुणः ।
सर्वाङ्गसुभगस्त्रैणवर्ण्यमानोऽनुमन्दिरम् ॥५२४॥
यः सिद्ध इव सर्वत्र कामचारी विचक्षणः ।
स शंखकुमरः स्वामी मम तस्यास्मि वल्लभः ॥५२५॥
स्मित्वाऽऽह सानुरागं सा शुक ! प्रियनिवेदनात् ।
पूज्योऽसि तद्वद कथं स भवेद् दृष्टिगोचरः ॥५२६॥
शुकः प्राह-स-सर्वज्ञ इवान्यजनचिन्तितम् ।
ज्ञात्वा तदिच्छया व्योम्ना विद्याधर इवैति च ॥५२७॥
एवं चेद्दर्शनपथं स समेतु मम प्रियः ।
इत्युक्ते गुटिकामास्यात्क्षिप्तास्याविरभूच्च सः ॥५२८॥

वीक्ष्यामरमिवाध्यक्षं शंखं सा भूरिवाभवत् ।
आनन्दरससंसिक्ता प्रोल्लसत्पुलकाङ्कुरा ॥५२९॥
क्षणं मन्दाक्षवैलक्ष्यलक्षिते क्षणमीक्षितः ।
तया शंख सुधाकुण्ड इवातुण्डं ममज्ज सः ॥५३०॥
अथ प्रोचे शुको भद्रे ! तव प्राणप्रियो ह्ययम् ।
एतश्चिन्तित एवात्र तद्विधेहि यथोचितम् ॥५३१॥
शंखोऽथ दर्शयन् स्नेहं तां प्रत्यूचे वरानने ! ।
त्वदुत्कण्ठित एवाहं स्मृतमात्र इहागमम् ॥५३२॥
साऽऽह स्वामिन् ! विलम्बं मा कुरु मामन्यतो नय ।
ज्ञातं नृपेण चेदेतन्मृत्यु र्हो(र्नौ)भविता तदा ॥५३३॥
शुकरूपं परित्यज्य यक्षः प्राह शुभे मम ।
त्वदर्थोऽयं प्रयासस्तदविलम्बं चल द्रुतम् ॥५३४॥
हृत्वा कस्याप्यायुधानि धनुरादीनि यक्षराट् ।
रथं कस्यापि संनाह्य कुमारपुरतोऽनयत् ॥५३५॥
सुहृत्सूतं शस्त्रभृतं रथमारुह्य सप्रियः ।
निःससार कुमारोऽथ पुराद् यक्षसखो बहिः ॥५३६॥
तावच्छुद्धान्तं सैरन्ध्र्यो गत्वा राज्ञे व्यजिज्ञपन् ।
कुतोऽप्यागत्य केनापि कुमारी ह्रियते विभो ! ॥५३७॥
राजाऽऽह स्वेच्छया यान्ती कुमारी ज्ञायतेऽथवा ।
छलेनापहृता तद्वत्क्रियतेऽपक्रियोच्यताम् ॥५३८॥
सा देव ! यान्ती हृष्टेव कुमारी विदितेंगितैः ।
दासीभिरिति निर्दिष्टे स्पष्टमेतद्वचोऽवदत् ॥५३९॥
पुरुषद्वेषिणी भूत्वा स्वयं चेद् भजते पतिम् ।
तदयं कासतो गण्डः स्फुटितः स्वयमेव हि ॥५४०॥
तदानीय तमेवात्मसुतां तेन विवाहयेः ।
हसतो रुदतो यः स्यादतिथिर्हसतोऽस्तु सः ॥५४१॥

ततो राजा समारुह्य वाजिनं य(ज)वनं जवात् ।
जगाम तत्र यत्रास्ति शंखो बहिरवस्थितः ॥५४२॥
शान्तरूपं समायान्तं शंखो वीक्ष्य नृपं मुदा ।
अभ्येत्य प्राणमद्यद्वा सन्तो भ्रश्यन्ति नोचिताद् ॥५४३॥
राजा जामातरं वीक्ष्य चिन्तयामास चेतसि ।
क्षैरेय्यां शर्कराक्षेपस्तदयं यदयं पतिः ॥५४४॥
धन्योऽहं यस्य जामाता धन्येयं मम नन्दिनी ।
यस्याः पतिरयं धन्यो यज्जज्ञे सङ्गमोऽनयोः ॥५४५॥
हृष्टः पुरान्तरानीय स शंखं ससखं नृपः ।
शुभेऽहनि महोन्नत्या विवाहं विदधेऽनयोः ॥५४६॥
दत्त्वा हस्त्यश्वहेमाद्युपायनं पाणिमोचने ।
आवासे परमप्रीत्या जामातरमवासयत् ॥५४७॥
कियत्कालं कुमारोपि स्थित्वाऽभूद् गमनोत्सुकः ।
इच्छानुरूपतो भाग्यवतां स्याद्धिचेष्टितम् ॥५४८॥
स्वाभिप्रायं निवेद्यास्यै त्यक्त्वा चाश्वादिकं धनम् ।
अचालीदचलावीक्षाकौतुकी भूपभूः पुरः ॥५४९॥
व्रजन् शुश्राव लोकेभ्यः शंखः सौवीरपत्तने ।
अरिकेशरिराज्ञोऽस्ति सुता मदनमञ्जरी ॥५५०॥
स्वयंवरमहस्तस्याः पित्रा सूत्रितोऽखिलः ।
हूताहूता नृपाः सन्ति समेता ईदृशं वचः ॥५५१॥ [ युग्मम् ]
शंखोऽपि निकषे तस्मिन् पुण्यस्वर्णं परीक्षितुम् ।
य(यि)यासुरभवन्मित्रयुग्मयुक्तश्चचाल च ॥५५२॥
क्रमेण सौवीरपुरं प्राप पापविवर्जितम् ।
यद्देवौक इवोद्भूतपताकं कोटिनायकैः ॥५५३॥
तद्बहिस्ताद् विहस्ताभिर्नारीभिः स्वस्वकर्मसु ।
संकुलं कलयांचक्रे स स्वयंवरमण्डपम् ॥५५४॥

सतोरणमणिश्रेणिमयूखैरुन्मुखैर्गतैः ।
विजितः(त)स्वर्विमानो यः स्वःश्रियेवोच्छ्रितध्वजः ॥
कालवारिश्रितो ह्येष नैवमस्मीति चिन्तयन् ।
वातोद्धूतपताकाभिः स्वर्गं तर्जयतीव यः ॥५५६॥
चञ्चच्चन्द्रोदयस्फारतारको गुरुवासितः ।
नभोदेश इवाभाति यः स्वयंवरमण्डपः ॥५५७॥
तत्र मञ्चेषु पञ्चेषुश्रियः सिंहासनासिनः ।
क्रमाद्दशिरे भूपभुवा भूपतिसत्तमाः ॥५५८॥
दिव्याम्बरधरा दिव्यभूषणा दूषणातिगाः ।
नृपा नृपसुताऽऽलोकोत्कण्ठिता तस्थुरस्थिराः ॥५५९॥
तावत्ताताज्ञया कन्या स्नाता श्वेतविलेपना ।
श्वेतवस्त्रावृता मुक्ताहारादिशुचिभूषणा ॥५६०॥
याप्ययानं समारुह्य हस्तन्यस्थ(स्त)सुमालिका ।
सवयोभिर्वयस्याभिर्वृता मण्डपमासदत् ॥५६१॥
वसुन्धरेव ध(ल)सन्मध्यदेशा ललितकुन्तला ।
दोषेव विस्फुरत्तारालोका सद्द्विजराजभा ॥५६२॥
वार्द्धिवेलेव सन्नक्रा हयशीर्षा च शालिवत् ।
विलसत्कर्णगाङ्गेया या कौरवचमूरिव ॥५६३॥
एवमद्भुतरूपायां तस्यां भूपदृशः समम् ।
धारा धराधरस्येव धरायां नि(न्य)पतन्नथ ॥५६४॥
करात्तवरमाला सा यावत्तिष्ठ[ति] मण्डपे ।
तावदभ्येत्य तां कोऽपि जह्रे श्येनः खगीमिव ॥५६५॥
कन्येयं याति यातीति दर्शं(दृश्य)मानोन्मुखैर्नृपैः ।
अभूददृश्या सहसा यान्ती विद्युदिवाम्बरे ॥५६६॥
अरिकेसरिराजाऽपि पुत्रीहरणदुःखतः ।
व्याकुलो व्याजहारेदं राजसुभ्रे. पुरो ममः ॥५६७॥

भो! भो! शृणुत भूपाला! लोका! यः कोऽपि मत्सुताम् ।
प्रत्याहरति राज्यार्धं तस्य इच्छामि तामपि ॥५६८॥
मुद्रितेष्विव सर्वेषु मौनभाजिषु राजसु ।
शंखः प्राह महोत्साहस्त्वत्सुतामहमानये ॥५६९॥
व(वि)दितं विहितं वत्स! तद्दत्तं जीवितं मम ।
त्वर त्वरितमेवास्वं(व त्वं) रामः सीतामिवानय ॥५७०॥
शंखः सप्तदिनान्तस्तामानयामि न चेत्तदा ।
नयामि जीवितं वह्नावाहुतिं प्रोचिवानिति ॥५७१॥
प्रतिज्ञापूरणायाथ निर्गतः पार्थिवाग्रतः ।
साश्चर्यमीक्षमाणोऽसौ राजभिः सत्त्वशालिभिः ॥५७२॥
गत्वैकान्ते स सस्मार देवीं पूर्ववरप्रदाम् ।
तदैवैत्यावदद् वत्स! वदास्मि करवाणि किम् ॥५७३॥
स आह देवि! कोऽप्येत्य राजपुत्रीं स्वयंवरात् ।
जहार बालककरात् काकोलः पोलिकामिव ॥५७४॥
स्वयंवरसमेतानां भूपानां पश्यतां पुरः ।
हृत्वा कोऽपि ययौ सिद्ध इव न ज्ञायते हि सः ॥५७५॥
देवि! ज्ञानेन विज्ञाय वदादिश गता क्व सा ।
हृता केन यथा युष्मत्प्रसादादानयामि ताम् ॥५७६॥
देव्याह वत्स! जानामि यस्तस्या अपहारकः ।
तद्वद त्वां यथा तत्र नयामि क्षणमात्रतः ॥५७७॥
एवमस्त्विति तेनोक्ते देवी व्योमाध्वनाऽथ तम् ।
निनाय तत्र यत्रास्ति प्रदेशे रक्षिता कनी ॥५७८॥
उत्तार्य सुर्या मुक्तोऽसौ चञ्चन्मणिविभूषणः ।
संचचार सदाचारा(रः) सुभ्रुवेवार्भको भुवि ॥५७९॥
अथ देवी तिरोऽधत्त सोऽपि गच्छन् पुरः पुरम् ।
ददर्श दर्शनं बौद्धमिव शून्याश्रयं च तत् ॥५८०॥

विन्ध्याद्रिघनवच्चारु निपतन्मत्तवारणम् ।
वेश्यावासगृहमिव भोगिभिर्मुक्तकञ्चुकम् ॥५८१॥
धार्मिकस्वामिनो राज्यमिव ध्वस्तसुरालयम् ।
कौलदर्शनवन्नष्टपरलोकगतिस्थितिः ॥५८२॥
गतचित्रमपि क्वापि विलसद्गुहाचित्रकम् ।
यद्विशालमपि प्रोच्चशालामालाविराजितम् ॥५८३॥
ईदृशं तत्पुरं शून्यं विशन् मध्ये ददर्श सः ।
सर्वाङ्गसुन्दरं राजप्रासादं सप्तभूमिकम् ॥५८४॥ [ चतुर्भिः
यावदारोहति भुवं सप्तमी तस्य वेश्मनः । कुलकम् ]
तावदश्रान्तनेत्राश्रुप्लुतास्याऽदर्शि शाकिनी(सा कनी)॥५८५॥
सहागतेन यक्षेण प्रोचे सा सहसा शुभे ! ।
त्वद्गृहं हन्तुमेतोऽस्ति वीरोऽयमवलोकय ॥५८६॥
तामदृष्टगिरं श्रुत्वा यावदुन्मुखमीक्षते ।
तावच्चक्षुरभूत्तस्याः सव्रीडं साज(श्र)सं समुत् ॥५८७॥
निरूप्यासमरूपं तं दध्यौ धिग् मामनर्थिनं(नीम्) ।
काकिण्यर्थ इवार्थे मे कोटिः कष्टेऽयमेष्यति ॥५८८॥
तद्दैव ! किमहं जाता जाताऽपि हि मृता न किम् ।
यदीदृशनृरत्नस्य संभविष्णी विसूत्रिका ॥५८९॥
ध्यात्वेति सदया चित्ते प्राह साहसिकाग्रणीः ।
अत्रानिन्ये राक्षसो मामपहृत्य स्वयंवरात् ॥५९०॥
सोऽधुना राक्षसद्वीपे गतोऽस्त्यत्र विमुच्य माम् ।
ज्वर एकान्तर इव स पापी पुःसमे(पुरसे)ष्यते ॥५९१॥
तत् सर्वगुणज्येष्ठः श्रेष्ठरूपोऽपि सात्त्विकः ।
दुष्टोऽयं राक्षसोऽनिष्टं कर्ता तेऽतो व्रज द्रुतम् ॥५९२
जगादे समदः शंखो वचसि सुभ्रु ! मा मुह ।
ग्रदस्मि रक्षसां वर्गे निग्रहे विहिताग्रहः ॥५९३॥

समेत(तस्त)दसौ प्रातर्द्रक्ष्यसि स्वयमेव तत् ।
साध्ये प्रत्यक्षलब्धेऽर्थेऽनुमिच्छ(त्स)ति सुधीः किमु ॥५९४॥
प्रत्यक्षो न्यगदद् यक्षः संशयं मा वृथा कृथाः ।
आखण्डलोऽपि यस्याग्रे तृणं का रक्षसां कथा ॥५९५॥
हेलया मेरुमुत्पाट्य यो नरः कुरुते करे ।
तस्य सिद्धार्थधरणे सुभ्रु ! किं वद कौतुकम् ॥५९६॥
तदा त्वदर्थं दुःसाधमप्यूरीकृतवानयम् ।
इन्दिरार्थमपां नाथमथ्नादच्युतो यथा ॥५९७॥
किं च त्वदर्थं चेदस्याशुभं स्याच्छुभमेव तत् ।
तत्याज सीताहेतो[ः] दशास्योऽपि दशाननीम् ॥५९८॥
मन्दाक्षमन्दाक्षरवागुवाच न्यञ्चदानना ।
प्राणा ममैतदायत्ता वञ्चनावञ्चनं परम् ॥५९९॥
इति प्रीतिरसोल्लासवशप्रमुदितात्मनाम् ।
व्यतीयाय सुखेनाहोरात्रं तेषां क्षणादपि ॥६००॥
बभाषे राक्षसोऽभ्येत्य शंखं रे रे ! नराधम ! ।
मुमूर्षुस्त्वमिहायातस्तदिष्टं स्मर दैवतम् ॥६०१॥
प्रत्युत्तरयते यावत् कुमारस्तावदम्बरात् ।
देव्येत्य निबिडं बद्ध्वा भूमौ राक्षसमाक्षिपत् ॥६०२॥
शङ्खोऽवादीत्त्वया देवि ! किमिदं विहितं हहा ।
अद्यापि मम दोर्दण्डकण्डूतिस्तवद(तावदा)स्थिता ॥६०३॥
देव्याह वत्स ! ते भाग्यानुभावेनैव साहसम् ।
अकार्षमन्यथा काऽस्ति शक्तिर्मे रक्षसो ग्रहे ॥६०४॥
पलादः प्राह मां नाथ ! विमोचय दयामय ! ।
दुर्विलसितमीदृक्षं न भूयः करवाण्यहम् ॥६०५॥
शंखः प्राह पलाद ! त्वां मोचयामि मया सह ।
युध्यस्वानुच्छवाञ्छाऽस्ति न छलं महतां रणे ॥६०६॥

तव दृष्ट्यापि दृष्टोऽहं गतप्राण इवाभवम् ।
देव ! देव्या ततो बद्धोऽन्यथा केयं पुरो मम ॥६०७॥
युद्धेन तदलं मातुर्निर्यत्प्राणं विमोचय ।
दह्यते कूर्चमेकस्यापरो दीपचिकीः खलु ॥६०८॥ [युग्मम्]
इत्युक्ते सहसा शंखो बन्धनात्तममोचयत् ।
यतः स्युर्वच्छ(त्स)लाः सन्त उपशान्ते रिपावपि ॥६०९॥
तथाहि कीदृशो भद्र ! नारीराक्षसयोरयम् ।
चिकीर्षितस्त्वया विद्युद्वातयोरिव संगमः ॥६१०॥
इति पृष्टे कुमारेण स्वाञ्जलिं जलजाकृतिम् ।
विन्यस्य शिरसि प्रोचे नृचक्षास्तत्पुरस्त्विदम् ॥६११॥
चेष्टते देव ! कीटोऽपि विना हेतुं न हि क्वचित् ।
किं पुनर्मादृशो देवजातिजातो विभङ्गवान् ॥६१२॥
कारणं हरणे त्वस्याः शृणु स्वामिन् ! समाहितः ।
अस्तीह भरते नाम्ना सुग्रामो ग्रामसत्तमः ॥६१३॥
नानाविधवृपा वा(धा)रिगाङ्गेया बहुनन्द्यः ।
सुरूपाख्या(क्षा)हसन्ति स्म यद्वास्तव्या अपीश्वरम् ॥६१४॥
धनदेवो वणिक् तत्र मन्त्रसूत्रितवैभवः ।
धनदोऽपि कुवेरोऽभूत् ध्रुवं यद्धनदूषितः ॥६१५॥
तस्य सूनुः सूरदेवो देववद्विबुधप्रियः ।
बभूव सवनीभागभाजिपुन्नागभूषणम् ॥६१६॥
स पित्रा समये कन्यामनन्यां रूपसम्पदा ।
सौभाग्यसुन्दरीं नाम्ना विभूत्या परिणायितः ॥६१७॥
क्रमेण विषयानस्य सेवमानस्य रागतः ।
तया सह समुत्पेदे स्नेहस्याभ्यन्तरो रसः ॥६१८॥
पितर्युपरते सूरदेवो धनमदा(नमादाय)सह ।
विशिष्टभोगसम्पत्त्यै ययौ पोतनपत्तनम् ॥६१९॥

तत्रैकं सौधमादाय कान्तयाऽसौ तया सह ।
निवसन्नतुलं प्राप रतिं स्वेच्छां धनु(न)व्यये ॥६२०॥
स्नेहानुबन्धो दम्पत्योर्मिथोऽनुरक्तयोस्तयोः ।
क्रमेणैकत्वमापन्नो गुह्यनाग इवाभवत् ॥६२१॥
अन्यदा दैवयोगात् तत्कान्ता वातायनस्थिता ।
ददृशे पोतनपुरस्वामिना जितशत्रुणा ॥६२२॥
सा तु मोहनवल्लीव तथा मोहयति स्म तम् ।
तथा भूपस्य तस्याभूत् तदेकस्मरणं मनः ॥६२३॥
स्त्रीकटाक्षा. कालकूटं ततो वा विषमा हि ते ।
उपभुक्ते विषे मोह एषु स्यादीक्षितेष्वपि ॥६२४॥
स्त्रीकटाक्षाः कालकूटादप्येते विषमा यतः ।
विषेद्दे विषमीशोऽपि न कटाक्षान् पुनः स्त्रियः ॥६२५॥
मोहावेशवशो राजा नाकु(क)लयत्कुलायशः ।
अपहार्य नरैरार्यामेतामन्तःपुरेऽक्षिपत् ॥६२६॥
महाजनमुपादाय सूरदेवः प्रियाकृते ।
उपभूपमुपागत्य नत्वोचे रचिताञ्जलिः ॥६२७॥
स्पृशन् परकलत्राणि महानप्यधमां दशाम् ।
अवाप्नोति यथा पूर्वमीश्वरोऽपि हि षण्ढताम् ॥६२८॥
सर्वेषां क्षेत्ररक्षायै भवान् वृतिरिवास्ति यत् ।
स एवास्य कार्यस्य नाशकः शासकोऽस्तु सः (कः) ॥६२९॥
अन्यस्त्रीदुर्गतिद्वारदर्शने दीपिका विभो ! ।
तदियं दूरतस्त्याज्यास्ततस्तापभयादिव ॥६३०॥
अकीर्तिपटहस्तस्य देव ! बभ्राम भूतले ।
परनारीमनीषाऽपि पुंसा येन विनिर्ममे ॥६३१॥
पुरा देव ! दशास्योऽपि परपत्न्यपहारतः ।
असमर्थितवाञ्छोऽपि विपद्य नरके ययौ ॥६३२॥

आम्रे तुम्बीव संलग्ना त्वयीयं न विराजते ।
प्रसीद देहि मे देवि(व !) जायां वणिग्जनोचिताम् ॥६३३॥
महाजनोऽपि नत्वोचे कान्ता देवास्य दीयताम् ।
यन्न्यायरोपका भूपा अन्यायं कुर्वते कथम् ॥६३४॥
सतीषु राजकन्यासु शुद्धान्तेऽस्यां तवोचितः ।
न कर्तुं कल्पवल्लीषु घोषातक्यामिवाग्रहः ॥६३५॥
उक्ते(क्त्वे)ति पुरतः पौरैर्भूपतेरुपतयुक्तिभिः ।
सर्वं व्यर्थमभूद् यद्वद् वज्रे नखविलेखनम् ॥६३६॥
धृत्वा कण्ठेषु सोल्लुण्ठैर्वण्ठैर्निष्ठुरभाषिभिः ।
बहिष्कृताः कृतागस्का इव पौरा नृपाज्ञया ॥६३७॥
सूरदेवः स्वसुन्दर्या वियोगदहनार्चिषा ।
दह्यमानोऽन्तरत्यन्तं शुष्यति स्म स वृक्षवत् ॥६३८॥
स चक्र इव चक्रन्द प्रियाविरहविह्वलः ।
बभ्राम परितो राजकुलं सर इवाकुलः ॥६३९॥
न जने न वने रङ्गे न द्रङ्गे न धनेऽपि च ।
क्वापि प्राप्य रतिं पापव्याप(प्राप ताप)तप्त इवांशुमान् ॥
दुःखार्तः सोऽन्यदोद्याने गतोऽदर्शि तपस्विना ।
शैवेनैकेन दुःखस्य कारणं पृष्टवानपि ॥६४१॥
तं साद्यन्तमुदन्तं स्वं स जगाद तपस्विने ।
तस्यार्तस्यौषधमिवोपदेशं स मुनिर्ददौ ॥६४२॥
रसेनेवोपदेशेन तेनान्तेन क्षणादसौ ।
अपेतमोहो वैराग्यात् तस्माद्दीक्षामुपाददे ॥६४३॥
प्रतिपाल्य चिरं दीक्षां पूर्णायुर्मृत्युमाप च ।
सञ्जातो राक्षसद्वीपे सोऽहं राक्षसनायकः ॥६४४॥
ज्ञात्वा विभङ्गज्ञानेन जितशत्रुं व्यसूत्रयम् ।
तस्येदमिति वैरेण द्रङ्गमप्युदवासयम् ॥६४५॥

देशवासी समस्तोऽपि लोकोऽस्तोकभिया मम ।
आदाय जीवितान्याशु काकनाशं पलायितः ॥६४६॥
तदादि राक्षसद्वीपादागत्यागत्य कर्हिचित् ।
क्रीडाम्यमा सजातीयैः क्रीडास्थानमिदं ततः ॥६४७॥
सौभाग्यसुन्दरी साऽपि भूपशुद्धान्तमागता ।
जैनदर्शनिनां पार्श्वेऽश्रौषीद्धर्मं कदाचन ॥६४८॥
श्राद्धधर्मं ससाराध्यापहृते वत्सरद्वयीम् ।
प्रपाल्यायुर्विपद्येयं जाता मदनमञ्जरी ॥६४९॥
रक्तोऽप्यहं कुमारीति नाहमेतामपाहरम् ।
जाते स्वयंवरे नूनं कोऽपि संपरिणेष्यति ॥६५०॥
परस्यैतत्पतिभावं न सहेऽहमिति तत्क्रुधा ।
उपानयमिमामत्र स्त्रीवैरं यत् फलेग्रहि ॥६५१॥
कुमारभाग्यविस्फूर्त्या साहसेनासमेन ते ।
तुष्टोऽस्मि तदिमां वत्स ! समुद्वह कुलोद्वह ! ॥६५२॥
राज्यमप्यस्य देशस्य स्वीकुरु स्वीकुरु प्रजाः ।
निवसन्ति यथा ग्रामा अगरा नगराणि च ॥६५३॥
ओमित्युक्त्वा पुनः प्राह यदि सप्तदिनान्तरे ।
आनयामि न तां वह्नौ ताद्विशामि विशांपतेः ॥६५४॥
इति प्रतिज्ञामाधाय विधातुं न विलम्बनम् ।
युक्तं स्याद्देशवासार्थं स्थितस्यादस्यमेव तत्(?)॥ [युग्मम्]
प्रत्यर्पिष्यामि श्रुत्वेति कन्यामुद्यावसत्यपि (?) ।
उद्वोढा मां न वेत्येष क्षणमक्षिणता भवत् (?) ॥६५६॥
वामं तदाऽस्याः पस्पन्दे लोचनं दुःखमोचनम् ।
शुश्राव रावं तत्कालमशोकेऽशोकपक्षिणः ॥६५७॥
निमित्तद्वितयेनैषा मनीषा हितकारिणा ।
स्वस्मिन् संभावयामासानुकूलं दैवमस्ति यत् ॥६५८॥

भक्तिभाजा राक्षसेनात्यर्थमभ्यर्थ्य षड्दिनीम् ।
संस्थाप्य स्वागतानन्त्याच्छंखोऽतोष्यत सादरम् ॥६५९॥
यक्ष-राक्षस-देवीभिर्विमानेऽथ विनिर्मिते ।
आरुह्योभौ क्षणाद् व्योम्ना यान्तौ पोतनमीयतुः ॥६६०॥
स्वयं स्वयंवरे शक्रो रक्षार्थं समुपैति किम् ।
नवरं स सहस्राक्षदोषी न त्वेष तादृशः ॥६६१॥
किमादित्यो दुरालोकः सोऽयं तु प्रियदर्शनः ।
तदयं खेचरोऽभ्येति कन्यायै कश्चिदुत्सुकः ॥६६२॥
इति नानाविकल्पालीं राजलोकस्य कल्पतः ।
पारापत इव व्योम्न कुमारोऽवातरत् पुनः ॥६६३॥
विलोक्य तनयां भूपोऽध्यक्षां मुदमिवागताम् ।
आशिश्लेष ससुत्पन्नलोचनः के चुचुम्ब च ॥६६४॥
निर्व्यूढकार्यभारं तं कुमारं वीक्ष्य भूपतिः ।
धरित्री रत्नगर्भेति वाक्यं सत्यममन्यत ॥६६५॥
कुतः कथं कुमारासावानीता मत्सुता त्वया ।
ज्ञाता वा तदिदं सर्वं निवेदय पुरो मम ॥६६६॥
तावता राक्षसः सर्वं प्रत्यक्षीभूय भूयसा ।
तरसा कथयामास वृत्तान्तं भूपतेः पुरः ॥६६७॥
तदाकर्ण्य स वर्ण्यश्रीसंभारेण समागतान् ।
सन्मान्य भूपतीन् सर्वान् विससर्ज महीपतिः ॥६६८॥
शुभे दिने शुभे लग्ने भूपतिर्भूपसूनुना ।
सुतामुद्धारयामास महोत्सवपुरःसरम् ॥६६९॥
राजा व्यचिन्तयच्चित्ते तस्याः करविमोचने ।
कन्याहर्त्रे स्वराज्यार्धदानमूरीकृतं मया ॥६७०॥
तदस्य देयमेतावत् सुतो मे नास्ति कश्चन ।
सुमन्त्रमिव पात्राय राज्यमस्मै ततो ददे ॥६७१॥

राजाऽपि मन्त्रि-सामन्तैर्देवीभिः सह संमतम् ।
विधाय सौधे नीत्वाऽसौ स्वासने तं न्यवेशयत् ॥६७२॥
अलिके तिलकं तस्य चान्दनं विदधे नृपः ।
भाग्यावासस्थिरीकारे किल शासनपट्टिकाम् ॥६७३॥
शिरो विधृत्य वामेन पाणिना दक्षिणेन तु ।
स न्यधादक्षराणीव तिलकोपरि तन्दुलान् ॥६७४॥
अवनम्रशिराः किञ्चिन्नतो भूपभुवं नृपः ।
अनु तं मन्त्रि-सामन्ताः नता पौरजना अपि ॥६७५॥
निःस्वाना दध्वनुर्नान्दीप्रवृत्तौ मङ्गलध्वनिः ।
उल्ललास नृपस्त्रीणां वन्दिनां च जयारवः ॥६७६॥
श्रीपतेः श्रीरिवार्धाङ्गभाजिनी कुम(मा)रस्य सा ।
अवाप पट्टदेवीत्वं(त्वा)भिषेकममुना सह ॥६७७॥
पुरा-ऽकर-क(व)रग्राम-धाम-कोशा-ऽश्व-हस्तिनः ।
किं चान्यदखिलं तस्मै दत्तवान् भूपतिः स्वयम् ॥६७८॥
स्वयं सर्वविदेवैषा(ष) शिक्षाऽनर्होऽस्ति तन्नृपः ।
ददौ न शिक्षां किं लेखशालामर्हति शारदा ॥६७९॥
सामन्त-मन्त्रिमुख्यस्य राजलोकस्य भूपतिः ।
पौराणां च पुरोऽवादीत् भो लोकाः! श्रूयतामिति ॥६८०॥
असौ वैदेशिकः कोऽपि भूपोऽभूदिति चेतसि ।
मा कुरुध्वं यतः पूषाऽन्यदिनेऽपि दिनेश्वरः ॥६८१॥
कुलक्रमागतं राज्यं स्यादयं न हि निश्चयः ।
सर्वत्र श्रूयते यस्माद् वीरभोज्या(ग्या)वसुन्धरा ॥६८२॥
सिंहानां सात्त्विकानां च समैकैव व्यवस्थितिः ।
यत्र क्षेत्रे व्रजन्त्येते तेषां पित्रर्जितं हि तत् ॥६८३॥
मत्तोऽप्यधिकमेवामुं गणयध्वं गुणाधिकम् ।
असौ सिंह इव स्वीयभुजोपार्जितमत्ति यः ॥६८४॥

तातदत्तं त्वस्मि राज्यं सदोपभुक्तपूर्व्यहम् ।
श्वानोऽपि स्वामिना दत्तमश्नाति मुदितोऽशनम् ॥६८५॥
अस्याज्ञां साऽवमन्यध्वं कदापि समदाशयाः ।
सहिष्यते न हि स्वल्पमप्यागोऽयं विदेशजः ॥६८६॥
गुरोर्भूपस्य तस्यानुशास्तिं शिष्या इवाप्य ते ।
भक्त्याऽवनम्रशिरसस्तथेति प्रतिपेदिरे ॥६८७॥
अथ प्रदाय दानानि दीनादिभ्योऽरिकेशरी ।
वन्यवृत्त्या प्रवव्रुते तपश्चरितुमुद्यतः ॥६८८॥
जातेऽपि वैभवाधिक्ये स्वमित्रं शंखभूपतिः ।
सस्मार वारिधिः किं स्याद्धर्मास्वप्यन्यथा स्थितिः ॥६८९॥
*धिग् पद्मं य इते मित्रे कोशं गोपयति क्षितौ ।
पाणिपद्मस्त्वभूदस्य मित्रे कोशविकाशकः ॥६९०॥
विससर्ज सुरीं भूरिभक्त्याऽभ्यर्च्य भुवो धवः ।
यक्षं स्वराज्याधिष्ठातृदेववर्गाधिपं व्यधात् ॥६९१॥
भूपो विज्ञपयामासे तावताऽभ्येत्य रा(र)क्षसा ।
स देवशून्यो विषयः पुरं च समवास्यताम् ॥६९२॥
प्रार्थनां विफलीकर्तुमसहिष्णुः स भूपतिः ।
प्रतिपद्य पलादोक्तं मित्रस्यान्वेषयन्मुखम् ॥६९३॥
धराम्यस्तशिराः सोऽपि प्राज्ञो वि(व्य)ज्ञपयन्नृपम् ।
प्रसादो दीयतां देवादेशेन स्वानुगामिनः ॥६९४॥
सुमित्र ! तत्र सत्त्वानां प्रयाहि सह रा(र)क्षसा ।
सुवासमुद्वसं देशं कुरुष्व नगरं च तत् ॥६९५॥

---

* पद्म धिक्, य क्षितौ इते–क्षीण गते अस्त गते वा मित्रे–सुहृदि सूर्ये वा, कोश–निधि कोरक वा गोपयति–प्रच्छन्न रक्षति सकोचयति वा, अस्य राज्ञ पाणिपद्मस्तु क्षितौ इते–क्षीणावस्था गते मित्रे कोशविकाशक —धनप्रदातेत्यर्थ. ।

तद्देशैश्वर्यमप्यूरीकृत्य निष्ठेर्यथासुखम् ।
समेत्य समये भूयाद् भूयो मे दर्शनातिथिः ॥६९६॥
प्रमाणमादेश इति प्रपद्य सह रक्षसा ।
गत्वा गगनयानेन क्रमात् पुरमवासयत् ॥६९७॥
देशस्य रक्षसा भ्रान्त्वा लोकः सर्वोऽपि मीलितः ।
देशश्च सुवसश्चक्रे किं न स्याद्देवनिर्मितम् ॥६९८॥
रक्षोऽपि तत्र तं भूपं विनिवेश्य यथागतम् ।
जगाम स्वस्थीचक्रे च भूपः सर्वं सुनीतितः ॥६९९॥
जलालोकेव संलग्ना प्रजा सर्वा नृपेऽभवत् ।
उपतापहरा तस्मिन् रक्ताकर्षणतत्पराः ॥७००॥
अहो शंखनृपो धन्यो यः परोपकृतौ परः ।
अचिरात् प्रीतिपात्राय राज्यं मित्राय दत्तवान् ॥७०१॥
मित्रं विधातुं धाताऽपि न राजानमलं क्वचित् ।
अपूर्वोऽयं विधिर्भूपो मित्रं राजानमादधे ॥७०२॥
इतश्च श्रीशंखभूपः श्रीमत्पोतनपत्तने ।
शशास न(अ)परान् पौरवासिलोकाननाकुलः ॥७०३॥
श्रीराम इव सर्वत्र न्यायतः पूजितोऽभवत् ।
उच्चचार वचः क्वापि वैदेहीति कदापि न ॥७०४॥
कुन्देन्दुविशदं यस्य यशः प्रसरदम्बरे ।
भुवनोपरि किं रेजे श्वेतक्षौमवितानवत् ॥७०५॥
न्यायाज्जनानुरागोऽस्मात् संपत्सम्पत्तिरद्भुता ।
दानं ततो यशस्तस्मात्सर्वमस्योत्तरोत्तरम् ॥७०६॥
असौ विसूत्रयामास बुद्धिसूत्रेण शात्रवम् ।
किं कोऽपि गुडसाध्येऽर्थे विषयीकुरुते विषम् ॥७०७॥
अथोपेत्य नृपाः केऽपि धन्याः कन्या उपायने ।
उपादाय मुदा तेन भुभूजा पर्यणाययन् ॥७०८॥

देशेषु भ्रमताऽनेन जाया याः स्युर्विवाहिताः ।
समानाय्यत(न्त) म(अ)खिलास्ता आदरपुरस्सरम् ॥७०९॥
अतिस्फीतिसमापन्नराज्यद्वयविभुः प्रभुः ।
प्रतापी[स] तपनवत् ख्यातिं प्रापदनुत्तराम् ॥७१०॥
नरोत्तमनरेशोऽथ सुतशुद्धिमवाप्य सः ।
प्राहैषीदौष्ट्रि(ष्ट्रि)कयुगं तस्याकारणकारणे ॥७११॥
तावेत्य त्वरितं शंखभूपतिद्वारि तस्थुषौ ।
वेत्रिणा वेदितौ राज्ञे नीतावन्तस्तदाज्ञया ॥७१२॥
नतौ दण्डप्रणामेनोपलक्ष्य पितृसेवकौ ।
आश्लिष्टौ सहसा राज्ञा हर्षोद्घुषितवर्ष्मणा ॥७१३॥
भूपोऽतिमुदितः स्वीयदेश्यदर्शनात्तयोः ।
स्वदेशादागतो वातो मुदे स्यात् किं पुनः पुमान् ॥७१४॥
क्षेमोदन्तं पितुर्मातुः परिवारजनस्य च ।
राज्यस्य सकलस्यापि प्रपच्छ स्वच्छमानसः ॥७१५॥
तेऽप्याख्यन् देव ! सर्वेषां कुशलं विद्यते परम् ।
त्वद्दर्शनमहौषध्याऽधुना भावि निरामयम् ॥७१६॥
अर्पयामासतू राजादेशपत्रं महीभुजे ।
प्रीतिसर्वस्वमिव सोऽग्रहीत् तातस्य भक्तितः ॥७१७॥
तमुन्मुच्य स निस्तन्द्रो वर्णावलिमवाचयत् ।
तथाहि स्वस्तिसहिताच्छ्रीमद्रत्नपुरात् पुरात् ॥७१८॥
नरोत्तमनराधीश. शंखं शंखसमश्रियम् ।
सुतमादिशति प्रीतिस्फीतिपल्लवितान्तरम् ॥७१९॥
यदादि प्रस्थितो वत्स ! मामनापृच्छय कुत्रचित् ।
तदादि प्रस्थिता निद्रा–बुभुक्षा–रतयो मम ॥७२०॥
तथा स्वमातुर्मम च चक्षुषोर्नीलिकां किल ।
स्वदर्शनांजनेनाशु समेत्यापनयेः स्वयम् ॥७२१॥

इति लेखार्थमालोच्य सोत्कण्ठस्तातदर्शने ।
बभूवोन्मथिता बाला श्रुत्वा केकिरवं यथा ॥७२२॥
आकार्य मित्रं दत्त्वाऽस्यानुशास्ति राज्ययोर्द्वयोः ।
चचाल मिलनायासौ स्वपितुः शुभवासरे ॥७२३॥
अनन्ता भूपसामन्ता महामात्या गतात्यया ।
चतुरङ्गचमूयुक्ता गोत्रा गोप्तारमन्वगुः ॥७२४॥
कपोलमूलविगलन्मदासिक्ताऽचलातलम् ।
वि(ब)द्धोत्तानपट्टमिव क्रमैर्न्यस्तैरिवारुचत् ॥७२५॥
चलद्रथरथाङ्गोत्थधूलिश्यामि(म)लिताम्बरे ।
हेमदण्डज्झलत्कारा अब्दे विद्युदिवाद्युतत् ॥७२६॥
चलद्भिर्वाजिभिर्नि(र्न्य)स्तैः खुरैर्भूमिरराजत ।
उच्चाटार्थं विद्विषतां ठकारैरिव मण्डिता ॥७२७॥
सेनायां पत्तयो रेजुः स्फारस्फरकपाणयः ।
तार्क्ष्याख्याः स्नेहतस्तार्क्ष्ये इवैतो बहुरूपभाक् ॥७२८॥
अनोभिर्वृषभैरुष्ट्रैः खरैरश्वतरैरपि ।
चेलुर्लोका लक्षसंख्यास्तेन भूपतिना सह ॥७२९॥
प्रतिग्रामं प्रतिपुरं स गृह्णन्नुपदां नृपः ।
क्रमाद् रत्नपुरोपान्तं प्राप्तोऽर्थिविहितेहित[ः] ॥७३०॥
नरोत्तमनराधीशो ज्ञात्वा सूनोः समागमम् ।
चन्द्रस्य वारिधिरिव हर्षात्कल्लोलवानभूत् ॥७३१॥
सकलेऽपि पुरे मञ्च-ध्वजा-तोरणकारणम् ।
आदिदेश विशामीशः स्वच्छेऽतुच्छं महोत्सवम् ॥७३२॥
राजादेशे पुरारक्षैर्विहिते सकलेऽप्यथ ।
सान्तःपुरपरीवारो निस्ससार पुरान्नृपः ॥७३३॥
शंखोऽपि तातमायान्तमालोक्यावातरद् द्विपात् ।
देवयात्रिकवद् भूमौ लुठंस्तातायतो गतः ॥७३४॥

गजादुत्तीर्य राजाऽपि कुमाराभिमुखं ययौ ।
तौ महीरावणो दध्यौ रुमी (?) इव मिमीलतुः ॥७३५॥
पपात तातपद्‌योः कुमारः सारभक्तिमान् ।
पिताऽपि वक्षसाऽऽश्लिष्य सुतं शीर्षे चुचुम्ब च ॥७३६॥
पादौ ववन्दे स्वाम्बाया अम्बिकाया इवाग्निभूः ।
आश्लिष्यन् सुतमेषाऽपि सिञ्चन्ती संमुदाश्रुभिः ॥७३७॥
तन्मुदश्रुजलैर्जज्ञे युक्तं रोमाङ्कुरोद्गमः ।
चित्रमेतत्तु यत्तस्य शोषिता शोकवल्लरी ॥७३८॥
अन्यासामपि मातॄणां मुदितो न्यपतत् पदोः ।
उत्तार्य न्युंच्छनान्यस्मै सर्वास्ता ददुराशिषः ॥७३९॥
अन्येऽपि स्वपरीवारवर्गः पौरजनोऽपि च ।
नमन् शंखेऽपि सर्वे(र्वो)ऽपि यथोचितमभाष्यत (?) ॥७४०॥
चिरं जीव चिरं नन्द चिरं पालय मेदिनीम् ।
प्रवृद्ध(वर्ध)स्व समृद्धयेति स पौरैरभिनन्दितः ॥७४१॥
श्वश्रूचरणयोः सर्वाः स्नुषास्तोषभृतान्तराः ।
विनता आशिषस्ताभिः प्रदत्ताः प्रतिपेदिरे ॥७४२॥
नरोत्तमनृपः पट्टहस्तिनं सह सूनुना ।
जये(यन्ते)नेव हरिर्हस्तिमल्लमारूढवानथ ॥७४३॥
उद्यद्‌ध्वानैः स निःस्वानैर्भेरीभांकारहारिभिः ।
वाद्यमानैर्महामानैर्वादित्रैरपरैरपि ॥७४४॥
वन्दिनां जयनिर्घोषैर्हयहेषारवैरपि ।
दिशः शब्दमयीः कुर्वन् प्रविवेश पुरं नृपः ॥७४५॥
हर्षहास्योल्लसद्दन्तकान्तिविच्छुरिताधरम् ।
पुरंध्र्यो दर्शयामासुः कुमारं सस्पृहं मिथः ॥७४६॥
सकटाक्षैर्मृगाक्षीणां क्षीरडिण्डीरसोदरैः ।
संलग्नैर्विशदाङ्गश्रीः [शंखः]शंख इवाभवत् ॥७४७॥

प्रतिहट्टं प्रतिगृहं प्रतिरथ्यान्तरं नृपः ।
ढौकनैर्विविधैः पूज्यमानः सौधमुपागमत् ॥७४८॥
यक्षो नगरनिःसारात्प्रभृति प्रसृतौजसः ।
शंखस्य चरितं सर्वमाचचक्षे नृपाग्रतः ॥७४९॥
नरोत्तमनृपः शंखं प्राप्तराज्यद्वयं स्वयम् ।
चक्रे स्वराज्यभर्तारमपि तं जनसंमतम् ॥७५०॥
न्यस्तराज्यभरस्तस्मिन् निश्चिन्तश्चरणोन्मुखः ।
नृपस्तस्थावेतदेव वार्धक्ये युक्तमीदृशम् ॥७५१॥
उपशान्तो नृपः पूर्वः प्रतापी च नवोदितः ।
कृष्णप्रतिपदा प्राप्यः (प्राप्य) सोमार्काविव रेजतुः ॥७५२॥
तस्य पालयतो लोकानन्यदोद्यानपालकः ।
एत्य विज्ञपयामासेऽद्योद्याने देव ! केवली ॥७५३॥
नाम्ना शुभंकरः सर्वसर्वसन्देहदेशकः ।
आगतोऽस्ति महीनाथ ! कृतार्थय दृशौ ततः॥७५४॥[युग्मम्]
नरोत्तमनृपः श्रुत्वा स्वेष्टं रोगीव भेषजम् ।
विद्या एव ददौ तस्मै मुदितः पारितोषिकम् ॥७५५॥
नरोत्तमनरेशोऽथ शंखराजसमन्वितः ।
सान्तःपुरपरीवारो निर्गतो वन्दितुं मुनिम् ॥७५६॥
तौ केवलिनमालोक्य गजादुत्तीर्य भूपती ।
उत्सृज्य राज्यचिह्नानि पञ्चधाऽभिगमान्वितौ ॥७५७॥
मुनिमानेमतुर्भूमिपीठपश्चाङ्गसङ्गमौ ।
तेनापि हि धर्मलाभाशिषा तावभिनन्दितौ ॥७५८॥
आसीनौ विनयाधीनौ भूपौ केवलिनः पुरः ।
विधातुं देशनां सोऽपि बोधार्थमुपचक्रमे ॥७५९॥
जन्म-मृत्यु-जरालोक(ल)कल्लोलकुलसंकुलः ।
प्रसरद्व्याधिबोधो(पाथो)ऽथ य(या)दोभिरभितः श्रितः॥७६०॥

लसन्मोहमहावर्तगुप्यत्सत्त्वसमुच्चयः ।
मध्यप्रज्वलितक्रोधवडवानलदारुणः ॥७६१॥
मानसानुमदाघातध्वस्तयानशिवस्थितिः ।
मायावेत्रलतागुल्मदुःसंचाराङ्गिसङ्गतिः ॥७६२॥
तृष्णादिह्लादिनीपूरपुष्पल्लोभजलोच्चयः ।
सोऽयं भीमो भवाम्भोधिर्भो भव्या ! दुस्तरोऽङ्गिनाम् ॥७६३॥
[ चतुर्भिः कलापकम् ]

तस्योत्ताराय[य]दहो यत्नं कुरुत साम्प्रतम् ।
अन्यथा सर्वसिद्धार्थं सिद्धिर्द्वीपं न चाप्स्यथ ॥७६४॥
अस्य चोत्तरणोपायः सर्वज्ञैः कीर्तितो ह्ययम् ।
संयमो यानपात्रं तदत्र कार्यो महाग्रहः ॥७६५॥
यद्बहुलोहसम्बद्धमपि सत्सत्त्वकारकम् ।
सत्कर्णधारं तद्यानपात्रं स्यात्कस्य नो मुदे ॥७६६॥
आकर्ण्य देशनां रक्तं भूत्वा भूपमनः स्थिरम् ।
विरक्तं समभूत् माया मुनिशक्तिरहो नवा ॥७६७॥
नरोत्तमनृपो नत्वाऽपृच्छत् केवलिनं मुदा ।
प्रभो ! पूर्वभवे पुण्यं किं कृतं सूनुना मम ॥७६८॥
यत्र यत्र जगामैष राज्यं हित्वैकको निजम् ।
तत्र तत्र सामित्रोऽपि प्राप सम्पदमद्भुताम् ॥७६९॥
आचख्यौ केवली भूप ! सावधानमनाः शृणु ।

शंखपूर्वभवीयकथा ।

अस्तीह भरते ग्रामसत्तमः सुस्थिताभिधः ॥७७०॥
तस्येशो ललिताभिख्यः क्षत्रियान्वयसंभवः ।
बभूव यदसिर्मन्त्री शत्रूच्चाटं चकार तत् ॥७७१॥
तारादेवीति तस्याभूत् प्रिया देशप्रिया प्रिया ।
या निबध्य गुणैश्चक्रे स्थिरं कान्तमनःकपिम् ॥७७२॥

स ग्रामीणप्रजा गोप इव गाः पालयन् समाः ।
बभूव दोग्धा यशसां पयसां विशदात्मनाम् ॥७७३॥
ग्रामद्वारि स आसीनोऽन्यदाऽऽस्ते ग्रामपर्षदि ।
अपश्यत् पुरुषं कंचिल्लग्नं *वालेयवालधौ ॥७७४॥
खरेण चरणाभ्यां स हन्यमानोऽपि वालधिम् ।
नामुचद् गात्रसंकोची यथा पुच्छधृतोरगम् ॥७७५॥
ग्रामीणैर्मुञ्च मुञ्चोक्तेऽप्यमुञ्चन् खरताडितः ।
पपात निःसहः शाखाभ्रष्टः कपिरिवारटन् ॥७७६॥
ग्रामेशादिजनः सर्वस्तमुत्थाप्यानुकम्पया ।
वपुः प्रमार्ज्य वस्त्रान्तैः शीतं जलमपाययत् ॥७७७॥
पर्षद्यानीय पृष्टोऽसावेतावान् किं तवाग्रहः ।
हन्यमानोप्युच्यमानोप्योज्झत् पुच्छं खरस्य न ॥७७८॥
सोप्याह देव! मात्राऽहमुक्तो जात! त्वमीदृशः ।
भरिष्यस्युदरं वत्स! कथं कार्यश्च्युथादरः ॥७७९॥
तदाऽन्यादिष्टमादेशं लब्ध्वा तत्र कृताग्रहः ।
तथा भवेस्त्वं लोकस्य यथा स्याः सर्वदा प्रियः ॥७८०॥
अम्बादेशेन तत्पुच्छं नामुञ्चम् विहिताग्रहः ।
धारयामुं खरमिति तत्स्वामिभणितो ह्यहम् ॥७८१॥
श्रुत्वेति ग्रामनाथोऽन्तरचिन्तयदयं युवा ।
मुग्धोऽस्ति तदमुं नीतिगृहे संस्थाप्य शिक्षये ॥७८२॥
अथासौ सह नीत्वा तं कर्मकृत्वे(त्ये) न्ययोजयत् ।
भोज्यमाच्छादनं शिक्षां दत्तेऽस्मै दयया खलु ॥७८३॥
भोजनावसरेऽन्येद्युर्ग्रामेशाह्वायनाय सः ।
प्राहैषि पत्न्या ग्रामीणसभायामभितस्थुषः ॥७८४॥
सोऽप्येत्य मौर्ख्यात्सर्वेषां शृण्वतां प्रकटं जगौ ।

* रासभपुच्छके.

शब्देन महता स्वामिन्! रब्बा भवति शीतला ॥७८५॥
ग्रामेशोऽप्यस्त्यहो रब्बामित्यसौ सहवासिभिः ।
हस्यमानो गतो गेहं मौर्ख्यं धिगिति चिन्तयन् ॥७८६॥
तं निवेश्य रहः प्रोचे सभायां संस्थितस्य भो! ।
न वाच्यं वाचकं किञ्चिन्निर्देश्यं उत्थितस्य मे ॥७८७॥
एवं शिक्षां प्रदायासौ भोजनं विदधे स्वयम् ।
स चक्रे स्वोचितं कर्म कर्मकृन्मूर्खशेखरः ॥७८८॥
दह्यमाने गृहेऽन्येद्युः प्रेषितः कान्तया पुनः ।
आकारणाय कान्तस्य देवीयात्रामहस्थिते ॥७८९॥
ग्रामोपान्तवने देवीयात्रायातजनोच्चये ।
वीक्ष्य ग्रामेशमासीनं पूर्वशिक्षां हृदि स्मरन् ॥७९०॥
चिरं मौनधरस्तिष्ठन् पृष्टो ग्रामाधिपेन सः ।
उवाच कर्णलग्नस्ते गृहं ज्वलति वह्निना ॥७९१॥
यावन्निरीक्षते ग्रामाभिमुखं ग्रामनायकः ।
तावद् धूमः प्रापदैक्यं नभसा क्षीरनीरवत् ॥७९२॥
ग्रामेशः प्राह भो मूर्ख! किमेत इयतीं भुवम् ।
कथं नाकथयिष्यस्त्वं स्थितः किं कीलितांगवत् ॥७९३॥
स प्राह स्वामिन्या प्रेषितोऽहं समागमम् ।
लोकमेलापकस्थस्य नाचख्यौ तव शिक्षया ॥७९४॥
ग्रामेशो ग्रामलोकेन सह याति त्वरागतिः ।
यावता तावता वेश्म वह्निना भस्मसात् कृतम् ॥७९५॥
ततः कर्मकृतं प्रोचे ग्रामेशो मूर्ख! दृश्यते ।
यत्र धूमः स्वयं क्षेप्यं धूलि-पङ्कादि तत्र हि ॥७९६॥
एवं करिष्येऽङ्गीकृत्य लग्नोऽसौ नि[ज]कर्मणि ।
ग्रामेशोऽपि नवं वेश्म कारयामास तत्क्षणात् ॥७९७॥
वासांसि नवधू(धौ)तानि ग्रामेशदयिताऽन्यदा ।

गृहापवरकान्तःस्था धूपयामास धूपनैः ॥७९८॥
प्रसरन्तमम्बरेभ्यो दृष्ट्वा धूमं विनिर्गतम् ।
कर्मकृत् तत्र चिक्षेप पङ्कधूल्यादिकाशुचिम् ॥७९९॥
विवेश वेश्मनो मध्ये तारा कार्ये क्वचिद्यदा ।
तदा तच्चैकृतं वीक्ष्य सहसा पूच्चकार सा ॥८००॥
रे पापिष्ठ दुराचार मूर्ख ! किं विहितं त्वया ।
सद्यो धौतानि वासांसि यद्येतानि विनाशयः(येः) ॥८०१॥
स प्राह स्वामिनाऽऽदिष्टं विहितं स्वहितं न हि ।
प्रभूक्तं न करिष्ये चेत् कर्ताऽन्यत् ब्रूहि किं ततः ॥८०२॥
साऽपि भर्तारमाकार्य तच्चेष्टितमदर्शयत् ।
सोऽवदत् सुभ्रु ! भूयोऽपि क्षालयेथा यथारुचि ॥८०३॥
सा प्राह क्षालनं पश्चादपि भावि परं त्वमुम् ।
निष्काशय गृहान्मूर्खं सदा सन्तापकारकम् ॥८०४॥
एकोऽप्यसमद्वेश्मकर्म विधातुं सर्वमप्यलम् ।
तन्न त्याजे(ज्यो)ऽनूरुरपि यथा सूर्यस्य सारथिः ॥८०५॥
सोचे भर्तरहं कर्म करिष्यामि स्वयं गृहे ।
निश्काश्योऽसौ सुवर्णेन तेन किं यत्तु कर्णहृत् ॥८०६॥
किं च कर्मकृताऽनेन कान्ताज्ञेन गुणस्तव ।
नशोभाऽपि वरं शाला शून्या चौरभृता न यत् ॥८०७॥
स प्राह स्वीकृतो मूर्खोऽप्येष किमुच्यते प्रिये ! ।
पशुं[पशु]पतिख्यातिरिति किं त्यजतीश्वरः ॥८०८॥
तदाऽसावन्वहं शिक्ष्यमाणो भावी विचक्षणः ।
यच्छैलसरिद्ग्रावाऽपि वृत्तः स्याद्बहुघर्षणात् ॥८०९॥
साऽऽह स्वामिन्नसौ भावी न दक्षः शिक्षितोऽपि हि ।
सदभ्यस्तोऽपि किं कुर्यात्काकोलः कोकिलास्वरम् ॥८१०॥
शास्त्रेऽपि श्रूयते किं च स्वामिन्नेतत् सुभाषितम् ।

पण्डितोऽपि वरं शत्रुर्मा मूर्खो हितकारकः ॥८११॥
किं चान्यः सेवकः स्वामिन् ! पतिमात्मानमप्ययम् ।
विनाशयेद्यथात्मानमामकुंभ इवोदकम् ॥८१२॥
अनर्थे पातयेदक्षः स्वमन्यानपि संश्रितान् ।
ग्रामीणांस्तापसो जाल्मो यथापूर्वमपातयत् ॥८१३॥
कः स तापस इत्युक्ते साऽऽह वैताढ्यपर्वते ।
विद्याधरो वेगचूलाभिधो विद्युत्पुराधिपः ॥८१४॥ तापसकथा।
अन्यदा स सभाऽऽसीनो जडत्वं शिवशासने ।
श्रुत्वेति सूक्तं तत्सत्यवीक्षायै भुवमागमत् ॥८१५॥
तदा पोलासकग्रामादाहर्तुं समिधो गतः ।
विद्यते तापसः कोऽपि सोऽस्याभूत् दृष्टिगोचरः ॥८१६॥
विचक्रे खेचरो धेनुं चरन्ती मुनिगोचरे ।
वीक्ष्य स्थूलतनुं तां गां मेने कामगवीमृषिः ॥८१७॥
खमुत्पपात सा यावत् तावत्पुच्छेऽलगन्मुनिः ।
स्वदेहेन स्वयं स्वर्गं गन्तुकामस्तया सह ॥८१८॥
साऽपि वैद्याधरी माया वैताढ्यमगमत् क्षणात् ।
तत्पुच्छविलग्नः सोऽपि मेने स्वर्गं तमेव हि ॥८१९॥
खेचरस्तं गृहे नीत्वा खादयामास मोदकान् ।
मुनिः स्वर्गफलान्येतान्यमन्यत महाप्रमान् ॥८२०॥
स्वादुभिर्मोदकैस्तृप्तोऽचिन्तयत्तापसो हृदि ।
धिगियन्ति दिनान्यस्मज्जन्म यातं निरर्थकम् ॥८२१॥
कृतार्थः साम्प्रतमहं प्राप्यापूर्वं दिवोऽशनम् ।
तदमुं ग्रामलोकस्याप्यानये दर्शनातिथिम् ॥८२२॥
किं तया क्रियते लक्ष्म्या परदेशेप्ववासया ।
या भवेन्न जनाध्यक्षा परद्वीपे रवेरिव ॥८२३॥
निश्चित्येति पुनर्धेनोर्गच्छन्त्याश्चरणाय सः ।

पुच्छलग्नो भुवं प्राप स्त(सु)व्यावर्तितसूत्रवत् ॥८२४॥
सोऽपि ग्राममुपेत्याशु न्यगदन्मोदकाशनम् ।
पुरो जनानां श्वानस्य क्षैरेयी किं स्थिरोदरे ॥८२५॥
उत्फुल्लगल्लः स्वर्गस्य फलानां वर्णनां मुहुः ।
कुर्वाणो विदधे ग्रामलोकं तल्लोकनोत्सुकम् ॥८२६॥
मूर्खर्षिवचसा मूर्खलोकाः स्वर्गदिदृक्षवः ।
तस्मिन् रक्ता हि रज्यन्ते सदृशाः सदृशैर्यतः ॥८२७॥
सोऽपि तान् सह कृत्वाऽथ ययौ यत्रास्ति सा गवी ।
विलग्नः प्रथमं पुच्छे तत्पथाभिज्ञ इत्यसौ ॥८२८॥
गोरुत्पतंस्तत्पादे लग्नोऽन्यस्तत्पदे परः ।
एवं लग्नाः सर्वलोकाः यथा स्युः गृह्यलांकुटाः ॥८२९॥
तत्पुच्छलग्नलोकानां श्रेणी रेजे विदूरगा ।
प्रमातुमन्तरं द्यावाभूम्योः सूत्रमिदं किमु ॥८३०॥
यावत्किञ्चिद्गता श्रेणिस्तावदेकेन केनचित् ।
तन्मध्यस्थेन सोऽप्रच्छि किंप्रमानि(णि)फलान्यहो ॥८३१॥
सोऽपि मौर्ख्यात्कराभ्यां तत्प्रमां विवदिषुः कुधीः ।
अमुचद्धस्तयोः पुच्छं वार्द्धौ पोतमिव क्षणात् ॥८३२॥
पपात तावती श्रेणिर्ग्रामीणानां तथाऽम्बरात् ।
यथा भग्नास्थिनिचयः सोऽपि तेऽपि क्षयं गताः ॥८३३॥
विमुञ्च तदमुं स्वामिन् ! मूर्खशेखरसेवकम् ।
बालानामबलानां च हितमादीयते वचः ॥८३४॥
एवमस्त्विति तामुक्त्वा सेवकं निरवासयत् ।
प्रायो नराः पुरंध्रीणां मन्थाना इव हस्तगाः ॥८३५॥
अथान्यः सुभगो नाम्ना विदध्रे सेवकोऽमुना ।
भद्रकप्रभृ(कृ)तिर्दक्षः स्वामिभक्तश्च सोऽभवत् ॥८३६॥
ग्रामेशोऽपि तदा तेन सेवकेनाभवत्सुखी ।

सर्वकर्मकरेणासौ गरुडेन यथा हरिः ॥८३७॥
भोजनावसरेऽन्येद्युर्ग्रामेशस्य गृहे मुनिः ।
मूर्तो धर्म इवागच्छन्मासक्षपणपारणे ॥८३८॥
तं वीक्ष्य जङ्गमं कल्पवृक्षं स्वगृहमागतम् ।
मुदितो ग्रामनाथोऽपि मुनिसन्मुखमाययौ ॥८३९॥
हर्षप्रकर्षोल्लसितगात्रो ग्रामपतिर्मुनेः ।
निपत्य पादयोः पत्नीमादिदेशेति सादरम् ॥८४०॥
यदस्ति राद्धं क्षीरान्नं कान्तं कान्ते ! तदानय ।
दत्तं यदस्मै पात्राय दानमानन्त्यमेति तत् ॥८४१॥
साऽपि प्रमुदिता यत्क्षीरान्नं पुरतो मुनेः ।
मुमोच खण्डमाज्यं च सेवकेन समानयत् ॥८४२॥
सा प्रियेण समादिष्टा हृष्टा दातुं समुद्यता ।
पायसं परया भक्त्या विशुद्धं शुद्धभावना ॥८४३॥
साधुरस्याः पुरो दध्रे स्वपात्रं यानपात्रवत् ।
संसारवारिधेरेतत्किलोत्ताराय कल्पितम् ॥८४४॥
सा सार्धं शर्कराज्याभ्यां पायसं परया मुदा ।
ददौ दापयिता भर्ता यच्छ यच्छेति वागभूत् ॥८४५॥
ददाना मुमुदे दानं दापयन्नेष तत्पतिः ।
चित्त-वित्त-पात्रयोगादुभाभ्यां पुण्यमर्जितम् ॥८४६॥
मुमुदे ददती दानमाददानो मुनिस्तथा ।
धन्याऽस्मि दात्री धन्योऽहं हर्षिता मनसा मतिः ॥८४७॥
सेवकोऽपि मुदा दानं तद्दत्तमनुमोदयन् ।
आर्जयत् पुण्यमतुलमहोदानमहोऽद्भुतम् ॥८४८॥
तस्य सत्पात्रदानेन दानराज्यस्य किं स्तुवे ।
जगत्पूज्योऽपि यत्साधुः पुरो यस्य करप्रदः ॥८४९॥
अहो सत्पात्रदानस्य वलितं किंचिदद्भुतम् ।

दाताऽन्नमात्रदानाद् यल्लभतेऽनन्तसम्पदम् ॥८५०॥
अन्यत्रागान्मुनिर्दानं लात्वा तेऽपि वृषोद्यताः ।
स्वस्वायुः प्रतिपाल्याथ मृत्युमाप समाधिना ॥८५१॥
त्रयेऽपि देवाः सौधर्मेऽभूवन् सहचरा मिथः ।
भुक्त्वा स्वर्गसुखान्येते जाता भूप ! क्रमादमी ॥८५२॥
ग्रामेशजीवस्त्वत्पुत्रः पत्नीजीवोऽस्य तत्सखा ।
च्युत्वा सेवकजीवस्तु मनुष्यभवमन्तरा ॥८५३॥
विधाय तत्र मिथ्यात्विसंसर्गादनुचर्यं च ।
अज्ञानकष्टमभवद्यक्षोऽत्र प्रीतिमानसौ ॥८५४॥ [युग्मम्]
पुत्रपूर्वभवं श्रुत्वा नरोत्तमनरेश्वरः ।
संसारविरक्तमना गुरून् नत्वा व्यजिज्ञपत् ॥८५५॥
कालस्वरूपाद् भयदात् प्राणिनां दारुणायतेः ।
संसारराक्षसादस्मात्प्रभो ! मां पाहि पालक ! ॥८५६॥
गुरुराह महाराज ! जिनमुद्रानियन्त्रितः ।
सदागममहामन्त्र(न्त्रा)श्रयः स्यान्न यथाऽस्य भीः ॥८५७॥
एकमुक्त्वा नृपो गत्वा पुरान्तर्जिनवेश्मसु ।
विधायाष्टाह्निकां दानं दीनादिभ्यः प्रदाय च ॥८५८॥
सर्वर्द्ध्या शंखभूपालानुगतो नगतो मुनिम् ।
नरोत्तमनृपो दीक्षां कक्षीचक्रे च हर्षतः ॥८५९॥
शंखभूपोऽपि स गुरुं प्रणम्य पितरं मुदा ।
आगमन्नगरं तातवियोगविधुराशयः ॥८६०॥
क्षेत्राणां जीवनं यच्छन् सस्यसम्पत्तिकृन्नृपः ।
प्रजा अजीजनद्धन्या वर्षाकाल इवोन्नतः ॥८६१॥
नरोत्तममुनिः सार्धं गुरुणा विहरन् भुवि ।
जज्ञे क्रमादनूचानो वाचंयमशिरोमणिः ॥८६२॥
सोऽन्यदा विहरन् रत्नपुरं पुरमुपेयिवान् ।

श्रुत्वा तदागमं शंखभूपतिर्वन्दितुं ययौ ॥८६३॥
प्रणम्योपविवेशाथ भूपो विनयवामनः ।
संसारवारिधितरीं वितेने देशनां मुनिः ॥८६४॥
यथा ह्यनन्ते संसारे भ्रमतां भववासिनाम् ।
छायाद्रुम इवानर्घो दुर्लभो मानुषो भवः ॥८६५॥
भव्यास्तत्रापि दुष्प्रापमार्यक्षेत्रकुलादिकम् ।
यावत्सुगुरुसंयोगे(गं) लब्ध्वाऽपि पुण्यतस्तकम् ॥८६६॥
महाव्रतमहारत्नान्य(न्या)ददूध्वं तद् गुरोः करात् ।
परदेशगता यद्वद् रत्नाढ्यव्यवहारिणः ॥८६७॥
अन्यथा दुर्लभे भूयोऽपीदृग्रत्नगुरौ गुरौ ।
लब्धे निधाविव गते हस्तामर्ष(र्शं) करिष्यथ ॥८६८॥
शंखोऽपि देशनां श्रुत्वोल्लसद्वीर्यबलो गुरुम् ।
महाव्रतमहारत्नान्ययाचत नृपोत्तमः ॥८६९॥
गुरुराह महाभाग ! विलम्बो न विधीयते ।
महाव्रतमहारत्नसंग्रहे कुरुतादरम् ॥८७०॥
ओमिति प्रतिपद्याथ शंखभूपः पुरे ययौ ।
राज्ये न्यवेशयत्सुरपालाख्यं तनयं नयी ॥८७१॥
तस्यापि नवभूपस्यार्धासने तस्थुषः पिता ।
शिक्षां विचक्षणस्यापि ददौ वात्सल्यतो यथा ॥८७२॥
वत्साज्यो न्यायतो लक्ष्मीः स्थिरा कीर्तिकरी हि सा ।
देहे बलेन या वृद्धिः सा शस्या ननु शोफतः ॥८७३॥
भाव्यं नात्यन्तरक्तेन न विरक्तेन सर्वथा ।
मध्यस्थेन त्वया सेव्या वत्स ! वश्येव काश्यपी ॥८७४॥
वेश्येव काश्यपी कस्य न भूता न भविष्यति ।
आयत्ता नवरं नैव वशा क्वचन जायते ॥८७५॥
महत्यापि[त]या दर्पं मा कृथा [अ]तिक्रमेण च ।

श्रूयते यद्दशास्योऽपि प्राप दर्पेण दुर्दशाम् ॥८७६॥
न कस्यापि विश्वासो वत्स ! कार्यः कदाचन ।
वार्द्धेर्विश्वासमुत्पाद्य किं कृतं वडवाग्निना ॥८७७॥
समोऽनुगजने वत्साप्युत्तमा-धम-मध्यमे ।
तुलाकण्टकवद् भूयात् यथा स्यास्त्वं प्रमाणभूः ॥८७८॥
नारीषु नाग्रहः कार्यो नदीष्विव कदापि यत् ।
उद्यत्कुशा नयन्त्येतान्नॄन्तुद्राह्याम्बुधौ भवे ॥८७९॥
धर्मे वत्सोद्यमः कार्यः सर्वदा सर्वदायके ।
जायते तेजसो वृद्धिः सूर्यस्यापि वृषाश्रयात् ॥८८०॥
दत्त्वेति सूनवे शिक्षां साधर्मिकजनेष्वथ ।
भक्त्या विधाय वात्सल्यं दीनादिभ्यो धनं ददौ ॥८८१॥
मुनींश्च परया भक्त्या प्रतिपाल्याथ पुस्तकान् ।
अभ्यर्च्याष्टाह्निका जैनवेश्मसुल्लासिनीर्व्यधात् ॥८८२॥
त्यक्त्वाऽन्तःपुर-रत्नादिसारवस्तुपरिष्कृतम् ।
राज्यं सर्वमभूद्दीक्षाकक्षीकारसमुद्यतः ॥८८३॥
[ त्रिभिर्विशेषकम् ]
वाद्यमानैर्महानादैर्वादित्रैर्विविधै रसैः ।
स पौरादिजनान्वीयमानमार्गः सुतेन च ॥८८४॥
शिबिकासंस्थितः स्वर्णमणिभूषणभूषितः ।
नगरान्निरगात् शंखो दीक्षादानोत्सुको नृपः ॥८८५॥ [युग्मम्]
मुन्यन्तिकमुपागत्य शंखो दीक्षामयाचत । शंखनृपदीक्षा ।
सोऽपि तस्य ददौ पञ्चमहाव्रतमणीनथ ॥८८६॥
नार्यो मदनमञ्जर्यादयः पतिपथानुगाः ।
घना अभूवन्नथवा योषितामुचितं ह्यदः ॥८८७॥
शंखमित्रमपि श्रुत्वा शंखदीक्षां प्रदाय च ।
सूरपालाय राज्ये द्रे स्वीचक्रे स व्रतं गुरोः ॥८८८॥

सुरपालनृपो नत्वा पितरं च पितामहम् ।
गत्वा स्वपुरमध्यास्त शास्ताऽभूत् सकलक्षितेः ॥८८९॥
शंखोऽथ गुरुभिः साधं विहर्तुमुपचक्रमे ।
साक्ष्योऽपि पार्श्वे साध्वीनां वव्रजुर्गुर्वनुज्ञया ॥८९०॥
परिपाल्य चिरं दीक्षां प्राप्य केवलसम्पदम् । शखमुनिमोक्षः ।
प्रबोध्य भविनोऽनेकान् स समित्रः शिवं ययौ ॥८९१॥

श्रुत्वा श्रुतिहृतिकरं श्रवणप्रियाणाम्
नृणां नृपस्य चरितं किल शंखनाम्नः ।
भव्या भवन्तु सततं निरता भवन्तो
दाने निदानरहिते शिवलग्नकेऽत्र ॥८९२॥

[ दानविषये शखराजकथा समाप्ता । ]

तथा—

सर्वेषां श्रेयसां मूलं शीलं पाल्यं विवेकिना ।
यतः सिंहादि-हस्त्याद्या वशे स्युरवशा अपि ॥८९३॥
तपो द्वादशधाऽपि स्यात् विधातव्यं विपश्चिता ।
निकाचितानामप्याशु विगमः कर्मणां यतः ॥८९४॥
अहर्निशं भावनीया भावना विशदाशयैः ।
सफलानि यतोऽमूनि दान-शील-तपांस्यपि ॥८९५॥
चतुर्भ्योऽभ्यधिका साधो ! जयत्यन्( लं ? )प्रभावना ।
तीर्थयात्रादिभिः कृत्यैः साऽऽधेया गृहमेधिभिः ॥८९६॥
साधो ! संघाधिपत्यं तु दुष्प्रापं चक्रिणामपि ।
समाश्रय यतस्तीर्थकरनामापि लभ्यते ॥८९७॥
गुरूपदेशो ह्यस्य वज्रलेप इवालगत् ।
तथाऽस्मिन् संवद्धा निश्चलाऽजनि धर्मधीः ॥८९८॥
अथ निखिलदेशेभ्यः संघं संमील्य शुद्धधीः ।
शत्रुञ्जयमहातीर्थप्रमुखेषु स सप्तसु ॥८९९॥

तीर्थेषु महतीं कुर्वन् जिनधर्मप्रभावनाम् ।
यात्रां निर्माय निर्मायः संघेशत्वमवाप यः ॥९००॥ [युग्मम्]
ततो वर्षद्वयेऽतीते सप्तभिः संघनायकैः ।
सह संघपतिश्चक्रे जिनयात्राममात्रधीः ॥९०१॥
नूतनैः कारितैर्बिम्बैः पुस्तकैश्च विलेखितैः ।
निभृतानि सुरागार–पौषधौकांसि यो व्यधात् ॥९०२॥
विविधानि विधायाथ धर्मकृत्यानि सर्वदा । आशाधरः स्वर्गं
साधुराशाधरः स्वर्गं जगाम सुखधाम सः ॥९०३॥ जगाम ।
तल्लघुर्देशलो देश–विदेशाविलसद्यशाः । देशलः ।
गृहनायकतां भेजे विष्णूरसीव कौस्तुभः ॥९०४॥
तस्य भोलीति या जाया मायावर्जितमानसा ।
विद्यते विद्यमानानां सतीनां सा शिरोमणिः ॥९०५॥
शीलकीलकसंविद्धो यन्मनःपञ्जराद्बहिः ।
बलिष्ठोऽपि न निर्गन्तुं क्षमते कामकेशरी ॥९०६॥
साऽसूत सूतत्रितयं त्रितयं यस्य जन्मनि ।
चकम्पे भयमापन्नं कार्पण्यं किल्बिषं कलिः ॥९०७॥
प्रथमः सहज(जः) स्नेहसहजं यस्य सर्वदा । प्रथमः सहजः ।
धर्मकर्माभिमुख्यं यद्वैमुख्यं पापकर्मणः ॥९०८॥
यद्दानेन जिता कामगवी कामगवीश्वरम् ।
जगामोपासितुं मेरौ कर्तुं कल्पतरुस्तपः ॥९०९॥
चिन्तां चिन्तामणिर्धत्ते यस्य दानेन निर्जितः ।
त्रयोऽपि तत् क्षितिं त्यक्त्वा गताः क्वचन सम्प्रति ॥९१०॥
तल्लघुः साहणः साधुरत्युज्ज्वलगुणाश्रयः । तल्लघु. साहणः ।
यद्यशःसरसी(सि?) मन्ये शशी हंस इवाबभौ ॥९११॥
जनो यत्सूक्ष्मदर्शित्वं वक्ति युक्तिं तदेति न ।
स्थूलानपि हि यद्दोषान् परस्यासौ न पश्यति ॥९१२॥

तृतीयः समरसिंहो यः स्यादगणितोयसे(?) । तृतीयः समरसिंहः ।
परं स एव संजज्ञे गुणैर्गम्यतमो नृणाम् ॥९१३॥
यस्यापूर्वो गुणः कश्चिन्न ददौ कस्य विस्मयम् ।
मोचयन् बन्धनाल्लोकं सरलत्वं सदा वहन् ॥९१४॥
देशलानुजलावण्यसिंहस्य श्रीपतेरिव । देशलानुजलावण्यसिंहः ।
लक्ष्मीर्लक्ष्मीनामिकाऽभूत् पत्नी सत्त्वहितावहा ॥९१५॥
यत्पञ्चशाखो दानेन कल्पद्रुम इवार्थिनाम् ।
चित्रं स करपत्राणामप्यसावुपरि स्थितः ॥९१६॥
साऽसूत द्यौरिव सुतौ सूर्याचन्द्रमसाविव ।
भासयन्तौ भुवं विश्वविश्वोपकृतिकर्मठौ ॥९१७॥
सामन्तनामा प्रथमः सत्तमो योऽभवत् सदा । सामन्तनामा प्रथमः ।
शम-शौच-सत्य-शील-सत्त्व-संयमशालिनाम् ॥९१८॥
अनुजः साङ्गणाभिख्योऽभवद् भुवनविश्रुतः । अनुज. सांगणः ।
श्रुतिप्राप्ता अपि नृणां लगन्ति हृदि यद्गुणाः ॥९१९॥
अथो लावण्यसिंहेऽपि स्वर्गवर्गमुपेयुषि ।
देशलो मन्दिरैश्वर्यं भेजे भाग्याधिकः सदा ॥९२०॥
स साधुः पञ्चभिः पुत्रैः संवृतोऽणुव्रतैरिव ।
शुभंयुभिरसौ रेजे गृहिधर्म इवाङ्गवान् ॥९२१॥
ज्येष्ठं सुतं गुणज्येष्ठं विचार्य सहजं पिता ।
प्रेषयामास वासार्थं श्रीमद्देवगिरौ पुरे ॥९२२॥
तल्लघुं साहणं सर्वकलाकौशलशालिनम् ।
वीक्ष्य तातः स्तंभतीर्थे निवासायासुषत् पुरे ॥९२३॥
स्वयं सर्वत्र पुत्राणां धुर्याणामिव सारथिः ।
शिक्षाप्रतोददानेन व्यधात् सत्पथगामिताम् ॥९२४॥
सहजः श्रीदेवगिरौ रामदेवं नृपं गुणैः । सहजो देवगिरौ रामदेवं
तथा निजवशं चक्रे यथा नान्यकथामसौ ॥९२५॥ नृप वशं चक्रे ।

कर्पूरपूरसुभगं ताम्बूलं यस्य यच्छतः ।
कर्पूरधाराप्रवाहबिरुदं बन्दिनो ददुः ॥९२६॥
तिलङ्गाधिपतिर्यस्य कीर्त्या श्रुतिमुपेतया ।
प्रेरितः स्वपुरि स्थानं प्रददौ देववेश्मनः ॥९२७॥
कर्णाट-पाण्डुविषये यद्यशः प्रसरत् सदा ।
तदधीशमुख्यलोकमुत्कं तद्दर्शनेऽकरोत् ॥९२८॥
अन्यदा देशलः साधुः श्रीमद्देवगिरौ पुरे ।
नूतनं जैनभवनं कर्तुमैच्छदतुच्छधीः ॥९२९॥
स साधुः सिद्धसूरिभ्यो गुरुभ्यः स्वमनोरथम् ।
आचख्यौ यन्ममेच्छाऽस्ति जैनमन्दिरकारणे ॥९३०॥
प्रभुप्रसादात् तदियं पूर्यतां मे झट(टि)त्यपि ।
को मूलनायकाजिनः क्रियतामायतौ हितः ॥९३१॥
प्रभुः प्रोचे तवोहाऽसावभवद् भाग्ययोगतः ।
जिनौकसां कारकाणां यतः स्यादुच्छ्रिता गतिः ॥९३२॥
दुष्टारिष्टहरः पार्श्वजिनः श्रीमूलनायकः ।
विधाप्यतामयं साधो ! सर्वकामितदायकः ॥९३३॥
अथ देवगिरिस्थस्य सहजस्य जिनौकसः ।
विधापनार्थमादेशं प्रेषयामास देशलः ॥९३४॥
सोऽप्यादेशं पितुः सद्यो यथा क्षीरं सशर्करम् ।
आददे प्रमदापूर्णो बुभुक्षित इवाधिकम् ॥९३५॥
श्रीरामदेवभूदेवं सन्तोष्योपायनैरयम् ।
जिनौकोभूमिमादत्त धर्मे को हि विलम्बते ॥९३६॥
स्वल्पैरह्नोभिरनिशं दीयमानैर्घनैर्धनैः ।
जज्ञे वैज्ञानिकोत्साहात् सम्पूर्णं देवमन्दिरम् ॥९३७॥
शीतदीधितिसंकाशमारासनशिलामयम् ।
अथासौ कारयामास देसलो मूलनायकम् ॥९३८॥

चतुर्विंशतिबिम्बानि द्वे बिम्बे च बृहत्तरे ।
सत्या-ऽम्बा-शारदायुग्म-गुरुमूर्तीरकारयत् ॥९३९॥
श्रीसिद्धसूरीनभ्यर्च्य सहादाय च देशलः ।
बिम्बानि स्कन्धवाहानां दत्त्वा स्कन्धेषु सोऽचलत् ॥९४०॥
श्रुत्वा सहजपालोऽपि गुरुबिम्बागमं मुदा ।
संघेनाभ्याययौ सार्धं प्रयाणकचतुष्टयम् ॥९४१॥
सम्प्राप्तानां देवगिरौ गुरुमूलार्हतामथ ।
सहजः कारयामास स प्रवेशमहामहम् ॥९४२॥
महोमङ्गलतूर्याणां विभाति प्रतिशब्दितैः ।
कलिनिद्रावशं धर्मं जगत्युत्थापयन्निव ॥९४३॥
प्रतिवेश्मद्वारसंस्था वु(ब)भुर्वन्दनमालिका ।
भव्यानां पुण्यवल्लीभ्यो निर्गताः पल्लवा इव ॥९४४॥
गृहे गृहे पूर्णकुम्भा विन्यस्ता अवभासिरे ।
पुण्यरत्नौघसम्पूर्णा निधयः प्रकटा इव ॥९४५॥
असमाने वर्तमाने सहजोऽथ महोत्सवे ।
बिम्बं देवगृहेऽनैषीत् स्वगुरून् पौषधोकासे ॥९४६॥
क्रमेण जलयात्रादिमहोत्सवपुरस्सरम् ।
प्रतिष्ठालग्ने समयं सिद्धसूरिरसाधयत् ॥९४७॥
ततश्चतुर्विधं संघं भोजनैर्वसनैर्वरैः ।
अपूपुजन् मुदा साधुदेशलः पेशलोदितः ॥९४८॥
मण्डपं कारयामास प्रासादपुरतः पृथुम् ।
देसलो देवकुलिकाचतुर्विंशतिसंयुतम् ॥९४९॥
प्रासादपरितो रम्यहर्म्यश्रेणिसमन्वितम् ।
मोहप्रवेशरक्षायै दुर्गं दुर्गमसूत्रयत् ॥९५०॥
स प्रसादे सातकुम्भकुम्भं साधुर्न्यवेशयत् ।
स्फुरद्दीप्तिं दीपमिव स्वकुलोद्द्योतहेतवे ॥९५१॥

तथा स्वर्णमयं दण्डं दधौ मूर्ध्नि जिनौकसः ।
विश्वे भ्रमन्त्याः स्वकीर्तेरवष्टम्भाय यष्टिवत् ॥९५२॥

साधुर्विधाय विविधैरथ धर्मकृत्यैः
श्रीजिनशासनसमुन्नतिमत्र देशे ।
श्रीगूर्जरावनिविभूषणपत्तनेऽसौ
सार्धं जगाम गुरुभिर्गुरुकार्यसिद्धौ ॥९५३॥

इति श्रीशत्रुञ्जयोद्धारप्रबन्धे वंशवर्णनो द्वितीयः प्रस्तावः ॥



# अथ तृतीयः प्रस्तावः ।



तदा तत्र सुरत्राणोऽलावदीनो नदीनवत् । अलावदीनो नृपोभवत् ।
उद्वेलद्वाजिकल्लोलोर्वराव्यापी नृपोऽभवत् ॥१॥
यः श्रीदेवगिरौ गत्वा बद्ध्वा च तदधीश्वरम् ।
न्यवेशयत् तं तत्रैव जयस्तम्भमिवात्मनः ॥२॥
सपादलक्षाधिपतिं वीरं हम्मीरभूपतिम् ।
हत्वाऽभिमानिनं सर्वं स तत्सर्वमुपाददे ॥३॥
श्रीचित्रकूटदुर्गेशं बद्ध्वा लात्वा च तद्धनम् ।
कण्ठबद्धं कपिमिवाभ्रामयत्तं पुरे पुरे ॥४॥
गूर्जरात्राधिपः कर्णस्तूर्णं यस्य प्रतापतः
नंष्ट्वा गतो विदेशेषु भ्रान्त्वाऽथो रंकवन्मृतः ॥५॥
ईशो मालवकस्यापि दुर्गस्थो बहुवासरान् ।
बन्दीव निन्ये तत्रैव मृतः पौरुषवर्जितः ॥६॥
कर्णाट-पाण्डुविषय-तिलङ्गादिमहीपतीन् ।
यः समस्तान् वशीचक्रे शक्रविक्रमभासितः ।७॥
समियानक-जाबालिपुरमुख्यानि योऽगृहीत् ।
स्थानानि विषमाणीह तेषां संख्यां करोति कः ॥८॥
खर्पराधिपसैन्यानि भ्रमन्ति विषये निजे ।
तथा चकार न यथा तत्सैन्यं पुनरागमत् ॥९॥
प्रसादपात्रं तत्रास्ते सुरत्राणमहीपतेः । अलपखानाख्यस्तत्रास्ते ।
सेवकोऽलपखानाख्यः पत्तने नरनायकः ॥१०॥
विहितप्रोषितपतिरिपुनारीजनोऽस्य न ।
निद्राति निद्रयाऽश्रान्तश्र(स्र)वदश्रुविलोचनः ॥११॥
यस्यास्य राजपत्न्योऽपि बन्दीभावमुपागताः ।
गौरवं निगदन्तीव क्वणत्कङ्कणनिःस्वनैः ॥१२॥

तस्य श्रीसमरसिंहः साधुदेशलनन्दनः।
विदधाति सदा सेवां सर्वकार्यकरी हि सा ॥१३॥
भूपोऽपि तद्गुणप्रीतः प्रीतिं बन्धाविवाकरोत्।
तस्मिन् साधौ यतो नृणां गुणा गौरवकारणम् ॥१४॥
मित्रोष्माणमपि प्राप्यासह्याः केचन धूलिवत्।
राजप्रसादतोऽप्येष शीतलश्चन्द्रकान्तवत् ॥१५॥
भूपप्रसादं सम्प्राप्य स देशस्वामिनामपि।
विदधाति स्म कार्याणि वार्द्ध्याप्तवारिमेघवत् ॥१६॥
जनानन्दकृता तेन सुवृत्तेन सुतेजसा।
देसलः सूनुना रेजे चन्द्रेणेव पयोनिधिः ॥१७॥
तस्यात्र धनदस्येव समग्रैश्वर्यशालिनः।
कालः कियान् व्यतीयाय सुखेन सरलात्मनः ॥१८॥
कदाऽपि दुःषमाकालानुभावाद् भुवि वर्तिनाम्।
भावानां चञ्चलत्वाच्च श्रेयसां विघ्नधर्मतः ॥१९॥
श्रीशत्रुञ्जयतीर्थेशश्रीनाभितनुजन्मनः।
दैवादजनि विध्वंसो म्लेच्छसैन्यविनिर्मितः ॥२०॥ [युग्मम्]
तदाकर्ण्य कर्णशूलसदृशं सुदृशां मनः।
तथा परवशं जज्ञे न सस्मार यथाऽऽत्मनः ॥२१॥
तद्दुःखदुःखितधियः शिश्रियुः केऽप्यनाशकम्।
अवदश्रुप्लुतदृशो रुरुदुः केऽपि चानिशम् ॥२२॥
स शिशुः कोऽपि न युवा न वृद्धः कोऽपि नाभवत्।
श्रावकः श्राविका वाऽपि यः पयोऽपि तदाऽपिबत् ॥२३॥
देसलोऽपि तदाकर्ण्य वज्राहत इवापतत्।
शीतोपचारसंप्राप्तचैतन्यो विललाप च ॥२४॥
धिक् त्वां कलियुगं पापं धर्मविघ्नविनायकम्।
तीर्थविध्वंसकं सत्य-शौच-सज्जनदूषकम् ॥२५॥

यदिदं भवपाथोधिपारसंप्रापणक्षमम् ।
शत्रुञ्जयमहातीर्थं त्वया पाप ! विनाशितम् ॥२६॥
विवेकिनमपि प्राप्तसन्तोषमपि मानवम् ।
कलिर्विडम्बयत्येव पिशाच इव दुष्टधीः ॥२७॥
पुण्यवारिभृतं भव्यघटं चञ्चुविदूषकः ।
कलिर्विटालयत्येव काकोलवदनुज्ज्वलः ॥२८॥
एवं संशोच्य गत्वा च सिद्धसूरिप्रभोः पुरः ।
साधुः शशंस तीर्थस्य सर्वं म्लेच्छविचेष्टितम् ॥२९॥
श्रीसिद्धसूरयः श्रुत्वा श्रुतश्रो(स्रो)तस्विनीश्वराः ।
ऊचिरे कुरु मा खेदं साधो ! शृणु भवस्थितिम् ॥३०॥
अस्मिन्नसारे संसारे सदा क्षणविनश्वरे ।
न कोऽपि भावः स्थिरतामाप्नुवन्ननुभूयते ॥३१॥
यतः कल्लोलतरलं जीवितं यौवनं धनम् ।
सर्वार्थसाधकं गात्रमपि विद्युल्लताचलम् ॥३२॥
वातोद्धूतार्कतूलाभाः संभोगाः प्रियसङ्गमाः ।
पुरा-कर-सरो-ग्राममुख्यं वस्त्वखिलं चलम् ॥३३॥
विशेषतोऽयमधुना दुःषमासमयोऽस्ति यः ।
तत्रानन्तगुणा हानिः प्रोक्ता तीर्थकरैरिह ॥३४॥
एवं विभाव्य संसारस्वरूपं साधुसत्तमः ।
न विषादो विधातव्यश्चेतसीदं तु चिन्तय ॥३५॥
धन्यः स एव धनवानुद्धारं यो जिनेशितुः ।
कारयिष्यति तीर्थस्य न भङ्गो जायते यतः ॥३६॥
तीर्थमेष सदा भद्र ! श्रीशत्रुञ्जयपर्वतः ।
स यावद्विद्यते भूमौ तावदेतदनश्वरम् ॥३७॥
यावन्तो जलधौ साधो ! विद्यन्ते जलबिन्दवः ।
तावन्तोऽत्र समुद्धारा समभूवन् पुराऽपि हि ॥३८॥

तेषु पञ्च समुद्धारा विख्याताः क्षितिमण्डले ।
समजायन्त नान्येषां विज्ञातुं नाम शक्यते ॥३९॥
अथ विज्ञपयामास प्राञ्जलिर्देशलो गुरून् ।
प्रभो ! प्रसादस्तीर्थस्य वर्णनेन विधीयताम् ॥४०॥
वास(वत्स)रेभ्यः कियद्भ्योऽर्वाग् महातीर्थमभूदिदम् ।
कश्चास्य महिमा केऽत्र समुद्धारकरा पुरा ॥४१॥
गुरुराह्वावसर्पिण्युत्सर्पिणीषु गतास्वपि । तीर्थस्योद्धाराः ।
बह्वीष्विदं महातीर्थं साधो ! न स्वल्पकालिकम् ॥४२॥
तदोद्धारकारका ये तदानीमभिधा(धया)स्वया ।
न ज्ञायन्ते साम्प्रतं ता बहुकालव्यतिक्रमात् ॥४३॥
अस्यामेवावसर्पिण्यां यस्तीर्थमहिमा पुरा ।
अतिमुक्तादिभिः प्रोक्तस्तं वक्ष्ये किञ्चनाधुना ॥४४॥
भरतेऽत्र पुरा नाभिजन्माजनि जिनेश्वरः ।
तीर्थंकराणां प्रथमः केवलज्ञानभास्करः ॥४५॥
तस्यासंश्चतुरशितिसंख्याका गणधारिणः ।
पुण्डरीकाभिधस्तेषु मुख्योऽभूद्भरतात्मभूः ॥४६॥
सोऽन्यदा केवलज्ञाने स्वस्यामु(नु)ल्लसति प्रभुम् ।
प्रणम्य प्रोचिवानेष विषादविषदुर्मनाः ॥४७॥
पयःपूर्णेऽपि तीरस्थस्तृषाकोऽपि सरोवरे ।
यथाऽर्यते तथा नाथ ! दुर्बलो लवणाकरे ॥४८॥
निवसन्नप्यलवणं भोज्यं भुङ्क्ते यथाऽचलम् ।
न कर्करमवाप्नोति सेवमानोऽपि रोहणम् ॥४९॥
तथाऽहं तव पौत्रोऽपि शिष्योऽपि भक्तिमानपि ।
समीपस्थोऽपि सततं ज्ञानं किं न लभे प्रभो !॥[त्रिभिर्विशेषकम्]
भगवानभ्यधादेवं महासत्त्व ! विषीद मा ।
यतो मोहादयोऽद्यापि तव सन्त्यान्तरारयः ॥५१॥

यदा शत्रुञ्जये तीर्थे महासत्त्व ! गमिष्यसि ।
त्वमान्तरारिपून् जित्वा केवलं लप्स्यते तदा ॥५२॥
नत्वा प्रभुं पुण्डरीकः स्वार्थसिद्धिविधित्सया ।
ततः प्रतस्थेऽप्येकाकी को हि वैरिजये स्थिरः ॥५३॥
पुण्डरीकं गणधरं यान्तं शत्रुञ्जयाय तम् ।
अन्वयुर्यतयः केऽपि जिनेशपरिवारतः ॥५४॥
गच्छतः पथि तस्याथ ग्रामतो ग्रामतोऽमिलन् ।
गत्वा गत्वा पञ्च पञ्च सप्त सप्त मुनीश्वराः ॥५५॥
एवं यावत्पुण्डरीकः पुण्डरीकगिरिं ययौ ।
तावत्तस्यामिलन् पञ्चकोटिसंख्यास्तपोधनाः ॥५६॥
इयता परिवारेण संयुतो गणभृद् गणी ।
आरुरोह गिरौ तत्र शत्रुवित्रासनोत्सुकः ॥५७॥
तैः समं पुण्डरीकोऽपि जग्राहानशनं क्षमी ।
मासेन केवलं लब्ध्वा सद्यो मोक्षमवाप सः ॥५८॥
चैत्रमासे पूर्णिमास्यां(यां) पुण्डरीकोऽत्र निर्वृतः ।
तेन तस्य गिरेर्जज्ञे पुण्डरीक इतीङ्गना ॥५९॥
जिनः श्रीनाभिजन्मापि पुण्डरीकगणेशितुः ।
सर्वं निर्वाणवृत्तान्तमाचख्यौ भरताग्रतः ॥६०॥
विज(व्यजि)ज्ञपज्जिनं सोऽपि प्रोल्लसत्पुलकांकुरः ।
धन्योऽहं नन्दनो यस्य सिद्धोऽभूज्जितविद्विषन् ॥६१॥
तदत्र तीर्थे भगवन् ! विधाप्य जिनमन्दिरम् ।
अहमप्यर्जये पुण्यं तीर्थं स्यात् प्रकटं तथा ॥६२॥
जिनोऽप्याह युक्तमेतद्विधातुं जिनमन्दिरम् ।
अन्यत्रापि कृते पुण्यं न सामान्यं किमत्र तु ॥६३॥
अथासौ भरतश्चक्री धर्मचक्रानिदेशतः । भरतस्य प्रथमोद्धार. ।
रूप्य–मणि–स्वर्णमयं तत्र चैत्यमकारयत् ॥६४॥

श्रीनाभिनन्दनजिनप्रतिमां रत्ननिर्मिताम् ।
न्यवेशयद् गर्भगृहमध्ये तं मूलनायकम् ॥६५॥
तथा मूर्तिं रत्नमयीं पुण्डरीकगणेशितुः ।
मणि-स्वर्ण-रूप्यमयीर्जिनमूर्तीः परा अपि ॥६६॥
ततः प्रसिद्धमभवत्तीर्थमेतदिह क्षितौ ।
शत्रुञ्जय-पुण्डरीकाद्येकविंशतिनामकम् ॥६७॥
तदस्मिन् विमलगिरौ भरतः प्रथमोऽभवत् ।
उद्धारकारी श्रीनाभिसूनुसद्मनिवेशनात् ॥६८॥
पञ्चाशद्विस्तृतो मूले योजनानि दशोपरि ।
अष्टावुच्चो योजनानि श्रीशत्रुञ्जयपर्वतः ॥६९॥
एतत्प्रमाणश्चतुर्थारकेऽसौ पर्वतस्ततः ।
हीयमानोऽरके भावी पञ्चमे सप्तहस्तकः ॥७०॥
तीर्थेऽस्मिन् ऋषभसेनप्रमुखाः परमेष्ठिनः ।
असंख्याः समवसृत्य सिद्धिं प्रापुः पुराऽपि हि ॥७१॥
यत्र त्रयोविंशतिश्च ऋषभप्रमुखा जिनाः ।
श्रीनेमिवर्जाः समवसृताः केवलशालिनः ॥७२॥
श्रीपद्मनाभप्रमुखा भावितीर्थंकरा अपि ।
यत्तीर्थं पावयिष्यन्ति स्पृष्ट्वा स्वपदपंकजैः ॥७३॥
श्रीबाहुबलिना यत्र समवसरणान्वितम् ।
मन्दिरं श्रीमरुदेव्याश्चारुरत्नैरकार्यत ॥७४॥
यस्मिन्नमिर्विनमिश्च मुख्यौ विद्याधराधिपौ ।
उभाभ्यां मुनिकोटिभ्यां सहितौ सिद्धिमीयतुः ॥७५॥
श्रीनाभिनन्दनजिनसन्ताने येऽभवन्नराः ।
असंख्यास्ते ययुर्यत्र मोक्षमाजिततीर्थपम् (?) ।७६॥
अङ्गजोऽजितनाथस्य सगरो भरताधिपः। सगरस्य द्वीतीयोद्धार ।
यत्र चैत्यसमुद्धारं कृत्वा मुक्तिमवाप सः ॥७७॥

सगरश्चक्रवर्ती स श्रीशत्रुञ्जयपर्वते ।
उद्धारेषु प्रसिद्धेषु पञ्चसु द्वितीयोऽभवत् ॥७८॥
यत्र रामादिसाधूनां तिस्रः कोट्यः शिवं गताः ।
नारदानां च नवतिर्लक्षा एकाधिकास्तथा ॥७९॥
कोट्यो दशास्मिन् द्रविड-वालिखिल्यादिभूभुजाम् ।
सिद्धिं गता निष्ठिताष्टकर्मकक्षा क्षणादपि ॥८०॥
प्रद्युम्न-शाम्बप्रमुखाः कुमारा यत्र कोटिभिः ।
सार्द्धाभिरष्टभिः सार्धं सिद्धिं प्रापुः सनातनीम् ॥८१॥
पञ्चापि पाण्डवाश्चैत्यं विम्बं चापि मणिमयम् ।
संवीक्ष्य दुःषमाकालं प्रधार्य च भाविनाम् ॥८२॥
लोकानां लोभिनां रक्षां विम्बं कुत्राप्यगोचरे ।
देशे विन्यस्य लेप्येन मूलविम्बमकारयत् ॥८३॥ [युग्मम्]
प्रासादमिष्टका-काष्ठमयमेते व्यधापयन् । पाडवानां तृतीयोद्धार ।
विख्यातास्तदमी लोके तृतीयोद्धारकारकाः ॥८४॥
कुन्त्या जनन्या सहितास्तेऽत्र पञ्चापि पाण्डवाः ।
मुक्तिमापुर्मुनीशानां सह विंशतिकोटिभिः ॥८५॥
थावच्चासूनुना सेलग-शुकप्रमुखसाधवः ।
भरतप्रभृतयोऽस्मिन्नसंख्याताः शिवं ययुः ॥८६॥
यत्राजित-शान्तिनाथौ जिनौ द्वितीय-षोडशौ ।
स्वस्वकाले चतुर्मासीं वर्षासु स्थितिमापतुः ॥८७॥
ततः श्रीनन्दिषेणेन यद्यात्रार्थमुपेयुषा ।
श्रीनेमिनाथशिष्येणाजितशान्तिस्तवः कृतः ॥८८॥
विम्बस्य यत्र चैत्यस्याप्युद्धारा गणनातिगाः ।
प्रत्येकं जज्ञिरे तेनाम्भोधिविन्दुमाः(गाः) स्मृताः ॥८९॥
यदन्यतीर्थे तपसा विहितेन फलं भवेत् ।
तदत्र दृष्टमात्रेऽपि भावतो लभ्यते फलम् ॥९०॥

पुंसां यथेच्छमन्यत्र कोट्या भोजितया फलम् ।
यदाप्यते तदत्रैकोपवासेनापि लभ्यते ॥९१॥
यानि कान्यपि तीर्थानि जयन्ति जगतीतले ।
तानि सर्वाणि दृष्टानि दृष्टेऽस्मिन् तीर्थनायके ॥९२॥
वीक्षिते यत्र नरक-तिरश्चां गतिवारणम् ।
भाविनामभवन्नूनं कुदेव-कुनरत्वयोः ॥९३॥
हिंसाजुषोऽपि हिंसा(स्रा)द्यास्तीर्थेऽस्मिन् संस्थिताः सदा ।
यान्ति प्रभावादेवास्य सुगतिं गतकल्मषाः ॥९४॥
नृजन्मनः फलमिदं जीवितस्य धनस्य च ।
शत्रुञ्जयगिरौ गत्वा यज्जिनेशो निरीक्ष्यते ॥९५॥
यदुपास्तिः तपो दानं श्रुतं शीलं जपक्रिया ।
क्रियमाणं सदाऽनंतफलमेतद्भवेदिह ॥९६॥
योऽत्राङ्गुष्ठमात्रमपि बिम्बं स्थापयते सुधीः ।
स भुक्त्वा चक्रवर्त्यादिसमृद्धिं स्वर्गमाप्नुयात् ॥९७॥
यत्र यक्षः कपर्द्याक्षः(ख्यः) श्रीनाभेयजिनेशितुः ।
सेवको भवति भव्यानां सन्ततं व्यक्तभक्तिमान् ॥९८॥
तदमुष्य मुख्यतीर्थनायकस्य क ईशते ।
प्रभाववर्णनां कर्तुं साधुसत्तमदेसल ! ॥९९॥
तथाऽत्र वीरनिर्वाणात् सम्प्रतिर्नरनायकः ।
विक्रम-पदलिप्ता-ऽऽम दत्ताः श्रीशातवाहनः ॥१००॥
उद्धारकारका एते परेऽपि बहवोऽभवन् ।
काले कलौ व्यधात् साधुरुद्धारं जावडिः पुनः ॥ [युग्मम्]
सोऽकारयद्यथोद्धारं जावडिर्धार्मिकाग्रणीः । चतुर्थो जावडेरुद्धारः ।
यथाश्रुतमहं वक्ष्ये तं साधो ! शृणु सादरम् ॥१०२॥
मधूकाख्यपुरे पूर्वं प्रागवाटकुलसंभवः ।
जावडश्रेष्ठिनः सूनुः समजायत जावडिः ॥१०३॥

सीतादेवीनामिकाऽऽसीत् सुशीलाऽस्य सधर्मिणी ।
सीताऽवतीर्णा प्रत्यक्षा न रावणप्रिया तु या ॥१०४॥
सोऽन्यदा सहितः पत्न्या श्रीशत्रुञ्जयपर्वते ।
श्रीनाभिनन्दनजिनयात्रायै जावडिर्ययौ ॥१०५॥
अतिहर्षवशोल्लासिपुलकांकुरसुन्दरः ।
जावडिर्जलसम्पूर्णैः कुम्भैर्जिनमसिस्नपत् ॥१०६॥
बिम्बं लेपमयं तेन पतता स्नात्रवारिणा ।
किंचिदाशातितं वीक्ष्य जावडिर्जायया सह ॥१०७॥
विखिन्नमानसस्त्यक्त्वा स चतुर्विधभोजनम् ।
तीर्थेशस्यादिनाथस्य पुरतः समुपाविशत् ॥१०८॥
जातैर्विंशत्योपवासैस्तमूचे शासनामरी ।
सिद्धो बुद्धो जिनः स्वामी किं दास्यति स उत्तरम् ॥१०९॥
परं कपर्दिनामास्य यक्षस्तीर्थस्य रक्षकः ।
आस्ते तत्पुरतो गत्वोपवासान् स्वैरमातनु ॥११०॥
जावडिः शासनसुरीगिरा गत्वा तदालये ।
न्यषदत् सीतया युक्तः स्वसमीहितसिद्धये ॥१११॥
षष्ठे जातेऽथोपवासे यक्षः प्रत्यक्षरूपभाक् ।
प्राह साह ! किमप्राग(प्राङ् न) निजं ब्रूहि प्रयोजनम् ॥११२॥
स ऊचे धर्मबुद्ध्या मे कुर्वतः स्वपनं जिनः ।
किञ्चिदाशातितः पापं तन्मया सहदर्जितम् ॥११३॥
अयं कलङ्कसम्पर्कों यावच्चन्द्रदिवाकरौ ।
तापयास्य(यिष्य)ति तेनाहमद्रष्टव्यमुखोऽभवम् ॥११४॥
तद् यक्षेश ! तथा धेहि प्रसादं विशदाशय ।
यथैतस्यैनसः किञ्चिद्विमुक्तिर्मम जायते ॥११५॥
यक्षः प्रोचे गज्जनके श्रीबाहुबलिकारितम् ।
चक्रेश्वर्या महादेव्या पूज्यमानमहर्निशम् ॥११६॥

बिम्बमस्त्यादिनाथस्याधुना भूमिगृहे स्थितम् ।
तदानीय स्थापयात्र प्रासादे मूलनायकम् ॥११७॥
जावडिः प्राह मे गेहे विद्यते न घनं धनम् ।
दूरदेशाद्गज्जनकात् बिम्बमानीयते यथा ॥११८॥
यक्षः प्रोवाच मा चिन्तामत्रार्थे कुरु कांचन ।
यानि द्वादशवर्षेभ्यः परतो वाहनानि भोः ॥११९॥
भवता प्रेषितान्यासन् तानि पूर्णानि सम्प्रति ।
समेष्यन्त्यष्टादशापि शीघ्रं भाग्यवशात्तव ॥१२०॥ [युग्मम्]
यक्षेशादेशतो हृष्टो जावडिः सीतया युतः ।
निःसन्देहं कार्यसिद्धिममन्यत स भाविनीम् ॥१२१॥
सप्तविंशे दिने सोऽथ सप्रियः पारणं व्यधात् ।
नहि मृत्युं गतः कोऽपि पञ्चमं गायति क्वचित् ॥१२२॥
वन्दित्वाऽथो तीर्थनाथं जावडिः स्वपुरं गतः ।
कपर्दियक्षस्यादेशे निःसन्देहमना द्रुतम् ॥१२३॥
द्रव्यलक्षत्रयं दत्त्वा शुल्कशालानियोगिनाम् ।
सन्दिग्धागमयानानां दाननिर्णयमादधे ॥१२४॥
अष्टादशापि यानानि सम्पूर्णानि महाधनैः ।
आयातान्यचिन्तितानि श्रेष्ठी हर्षमुपागतः ॥१२५॥
वीक्ष्यानेकलक्षदानं विलक्षाः शौल्कशालिकाः ।
स्वकरौ घर्षयन्ति स्म गतेऽर्थे द्यूतकारवत् ॥१२६॥
सपण्यैरथ विक्रीतैर्बहुकोटीश्वरोऽभवत् ।
मनोरथोऽपि पुण्यस्य सद्यः फलति देहिनाम् ॥१२७॥
महार्घ्योपायनं श्रेष्ठी समादायाथ गज्जने ।
जगाम जावडिर्यक्षोपदिष्टजिनहेतवे ॥१२८॥
तस्मिन् ज(य)वनजातीयः सुरत्राणोऽस्ति नायकः ।
जावडिर्विविधैर्वर्यैः प्राभृतैस्तमतोषयत् ॥१२९॥

सोऽपि तुष्टोऽवदच्छ्रेष्ठिन् ! वद किञ्चित्प्रयोजनम् ।
करोमि तदहं साध्यं यदन्येन न केनचित् ॥१३०॥
जावडिः प्राह भूपाल ! ददासि यदि याचितम् ।
प्रार्थयामि तदाऽहं त्वां कल्पद्रुममिवार्थिनाम् ॥१३१॥
ओमित्युक्ते नृपेणाथ श्रेष्ठी बिम्बमयाचत ।
बिम्बं किमिति स प्राह(हा)नभिज्ञो स यत्र गोचरे ॥१३२॥
व्यजिज्ञपज्जावडिस्तं प्रभो ! योऽस्माभिरर्च्यते ।
देवोऽस्य बिम्बं तन्मूर्तिरत्र भूमिगृहेऽस्ति सा ॥१३३॥
भूपः प्रोचे गृह्यतां द्राक् वेत्सि भूमिगृहं यदि ।
यक्षोदितैरभिज्ञानैरज्ञासीत्स्थानकं स तत् ॥१३४॥
यावदाविर्भावयन्ति भूमिं भूमिगृहान्विताम् ।
पुरुषाः श्रेष्ठिनस्तावद् बिम्बं प्रादुरभूत्ततः ॥१३५॥
चक्रेश्वर्या देवतयाः पूज्यमानमहर्निशम् ।
यदासीद् विविधै रत्नाभरणैर्दिव्यदामभिः ॥१३६॥
तं दृष्ट्वा जवनाधीशः साक्षात् कर्तैकनिस्तृतः ।
इति ध्यात्वा प्रणिपत्य महोत्सवमकारयत् ॥१३७॥
प्रशशंस सुरत्राणो जावडिश्रेष्ठिनं मुदा ।
धन्यस्त्वं पुण्यवान् यस्य प्रसीदं[ति] सुरा अपि ॥१३८॥
तद् गृह्यतामिदं बिम्बं पूरय स्वं मनोरथम् ।
ममापि पुण्यलाभोऽस्तु स्वस्थानादस्य दानतः ॥१३९॥
दुकूलवसनैः स्वर्णभूषणैरथ जावडिम् ।
सन्मान्य प्राहिणोद् भूपः सबिम्बं महसा सह ॥१४०॥
क्रमेण मार्गमुल्लङ्घ्य दुर्लङ्घ्यमपि मार्गतः ।
देवतातिशयाद् बिम्बं श्रीशत्रुञ्जयमापतत् ॥१४१॥
जावडिर्यावतीं भूमिं गिरेरुपरि वासरे ।
तद्बिम्बमारोहयति महायासपरैर्नरैः ॥१४२॥

व्यावृत्य व्यन्तरो बिम्बमुत्तारयति तावतीम् ।
एवमायास्यतस्तस्य षण्मासा व्यतिचक्रमुः ॥१४३॥
विषि(ष)ण्णो जावडिर्यक्षं चिन्तयामास चेतसि ।
सोऽपि प्रत्यक्षतामागादुपादिशदिति स्फुटम् ॥१४४॥
त्वं च प्रिया च ते श्रेष्ठिन् ! चलतः शकटस्य हि ।
चक्रयोरुभयोः पश्चात् भवेतं ग्राववद्युवाम् ॥१४५॥
द्वितीयदिवसे श्रेष्ठी सप्रियश्चक्रधारयोः ।
पश्चाद्बभूवावष्टम्भोपलवत् सहसा श्रिय (?) ॥१४६॥
सुखेन बिम्बमारोहद्रिरेरुपरि तत्क्षणात् ।
सत्त्वं हि कारणं सिद्धेः सर्वं सत्त्वेन जीयते ॥१४७॥
श्रीविक्रमनृपाद्ष्टोत्तरे वर्षशते गते ।
जावडिः स्थापयामास तद्बिम्बं मूलनायकम् ॥१४८॥
उत्थापितो निजस्थानाद्यदा लेप्यमयो जिनः ।
तद्वि(व्य)न्तरा महारार्टि कोपावेशात्तदाऽत्यजन् ॥१४९॥
प्रसर्पता निनादेन सकलं तेन भूतलम् ।
तथा चकम्पे स यथा द्विधाऽभूद्विमलाचलः ॥१५०॥
मूर्च्छापन्नाः सूत्रधाराः अपरेऽप्यखिला जनाः ।
भूमौ निपतिताः सद्यो वार्द्धिरुत्थलवि(च्छलति)स्म च ॥१५१॥
विश्वसंक्षोभमावीक्ष्य जावडिर्व्याकुलाशयः ।
लेप्यबिम्बाग्रतः स्थित्वा नत्वैवं तं व्यजिज्ञपत् ॥१५२॥
स्वामिन् ! ममापराधोऽयं क्षम्यतां कारणात्कृतः ।
प्रसीद भगवन् ! मह्यं कृपां कुरु कृपानिधे ! ॥१५३॥
मदादेशपरवशान् वराकान् कर्मकारिणः ।
उज्जीवय नरानेतान् सर्वसत्त्वहितोऽसि यत् ॥१५४॥
तथा ते प्रथमं नाथ ! स्नात्रपूजादिकाः क्रियाः ।
लोकः करिष्यति सदा नूतनस्यार्हतस्ततः ॥१५५॥

इति व्यवस्थावचसा तान्नरान् व्यन्तरामराः ।
सद्यः उज्जीवयन्ति स्म न देवा दुर्बलापहाः ॥१५६॥
श्रीवज्रस्वामिगुरुणा शुभलग्ने शुभाशयः ।
बिम्बमस्थापयच्छ्रेष्ठी प्रतिष्ठाप्य यथाविधि ॥१५७॥
बिम्बस्यानयने हेमलक्षाणि नव सोऽव्ययत् ।
दश लक्षान्प्रतिष्ठायां जावडिः श्रेष्ठिपुंगवः ॥१५८॥
अथ पृथुप्रमोदेन प्रासादोपरि संस्थितौ ।
जायापती विदधतुर्नृत्यं भृत्यसमन्वितौ ॥१५९॥
नृत्यन्तौ व्यन्तरैः पूर्ववैरि(र)तः प्रापितो(तौ) क्वचित् ।
तौ तत्र यत्र न ज्ञातौ पाण्डवैर(?) हि दुस्त्यजम् ॥१६०॥
तदसौ जावडिः श्रेष्ठी चतुर्थोद्धारकारकः । वाग्भटस्य पञ्चमोद्धारः ।
प्रसिद्धोऽभूदहो वक्ष्ये पञ्चमोद्धारकारकम् ॥१६१॥
श्रीमच्छ्रीमालवंशेऽभूद् बोहित्थः पुरुषः पुरा ।
यो दौस्थ्यांबुनिधेः पुंसां बोहित्थ इव तारकः ॥१६२॥
सूनुराम्रेश्वरस्तस्य देहिलाह्वश्च तत्सुतः ।
अज्य(जुज्झ)नागो महाभागस्तस्यापि तनयोऽजनि ॥१६३॥
तदात्मजो वीरदेवनामा देव इवापरः ।
चित्रं न कविविद्वेषी तथा दानवशंवदः ॥१६४॥
तत्सूनुरुदयनाख्य उदयच्छालभास्करः ।
विश्वे प्रकाशमाधत्त विस्फुरत्करदीधितिः ॥१६५॥
तस्य पुत्रौ द्वावभूतां सदा हितकरौ सताम् ।
प्रथमस्तयोर्वाग्भटो लघुराम्रभटोऽपरः ॥१६६॥
श्रीजयसिंहदेवेन स्वभूमण्डलमण्डपे ।
उदयनस्तम्भ इव स्थापितः सत्त्वसंयुतः ॥१६७॥
स प्रधानशिरोरत्नं व्यापारं प्राप्य भूपतेः ।
तथा कार्यकरो जज्ञे यथाऽऽसीत् प्राणवत्प्रियः ॥१६८॥

तदुत्तारितचिन्तोऽसौ भूपो भुनक्ति केवलम् ।
राज्यसौख्यं सुखेनैव मन्त्री राज्यधुरं दधौ ॥१६९॥
कदापि श्रीसिद्धचक्रवर्ती स्वप्रतिपन्थिनाम् ।
जैत्रसिंहं सुराष्ट्रासु जेतुं मंत्रिणमादिशत् ॥१७०॥
मन्त्र्यप्युदयनो राज्ञ आज्ञामादाय मोदतः ।
चचाल चलयन्नश्वखुराघातैर्वसुन्धराम् ॥१७१॥
चतुरंगबलोल्लासिरेणुभिस्तरणिं दिवि ।
तिरयन् तेजसाऽप्याप वर्धमानपुरं रयात् ॥१७२॥
संप्रेष्य स्वबलं सर्वं सुरधारापवर्जना (?) ।
स्वयं स्वल्पपरीवारः श्रीशत्रुञ्जयगिरिं ययौ ॥१७३॥
प्रणम्याथ तीर्थनाथं स्नपयित्वा विशुद्धधीः ।
अपूपुजद् वरैः पुष्पैर्वसनाभरणैरपि ॥१७४॥
यावदारात्रिकं पाणौ कृत्वाऽस्थात् स्वामिनं पुरः ।
मन्त्री गन्धर्वसङ्गीयमानजैनगुणाहृतः ॥१७५॥
तावदाखुर्दीपवर्तिं ज्वलन्तीं जिनपार्श्वतः ।
गृहीत्वागाद् भित्तिमध्ये ददर्शोदयनोऽपि तत् ॥१७६॥
चिन्तयामास मनसि यदाऽस्मिन् काष्ठनिर्मिते ।
जिनौकसि लगत्यग्निस्तदा देवः प्रमाद्यते ॥१७७॥
तदहं मूलतोऽप्येतद् देववेश्माश्मभिः स्थिरम् ।
कारयित्वा ततो भोक्ष्ये द्वितीयं भोजनं दिने ॥१७८॥
खली-तैल-जलैः सार्धं मिलितैर्वस्तुभिस्त्रिभिः ।
तदा स्नानं करिष्यामि यदा पूर्णं भविष्यति ॥१७९॥
प्रतिज्ञायेति वन्दित्वा जिननाथं गिरेरथ ।
समुत्तीर्यार्थभिमुखं (?) मन्त्री चक्रे प्रयाणकम् ॥१८०॥
अथो मिथो मिलितयोः सैन्ययोरुभयोरपि ।
महारणः प्रववृते खड्गाखड्गि शराशरि ॥१८१॥

क्रमेण जैत्रसिंहस्य सैन्येनातिविसर्पता ।
मंत्रिसैन्यं कांदिशीकं गन्तुमैच्छद्दिशोदिशम् ॥१८२॥
स्वं सैन्यं नश्यदुद्वीक्ष्य धीरयन्मन्त्रिपुंगवः ।
संवर्मितोऽरिघाताय युद्धाय स्वयमुत्थितः ॥१८३॥
जैत्रसिंहपुरः स्थित्वा मन्त्री स प्राह साहसी ।
अद्य स्मराभीष्टदेवं किं वा शस्त्रं करे कुरु ॥१८४॥
यतोऽहं श्रीसिद्धचक्रवर्तौ(र्ति)हस्ती समागतः ।
तत्तूर्णं शरणं याहि मत्स्वामिचरणाब्जयोः ॥१८५॥
सोऽप्याह साहसं ज्ञातं वणिजामस्ति नः सदा ।
तद्गादत्स्व तुलां हस्ते कृपाणं मुञ्च मा मुहः ॥१८६॥
यथा स्युश्चणका भक्ष्या न तथा मरिचान्यपि ।
यथा स्ववनिता घात्या न तथा सुभटोऽपि हि ॥१८७॥
अपसृत्य ततो याहि मद्दृष्टिप्रसरादसि ।
न किराटामुपरि मच्छस्त्रं वहति क्रुधम् ॥१८८॥
सेनानीर्विहितोऽस्मीति स्वामिना कुरु मा मदम् ।
सिंहनेपथ्यधारी श्वा सिंहनादं करोति किम् ॥१८९॥
मन्त्र्यूचे पौरुषं शक्त्या व्यक्तीस्याद् न बहूक्तिभिः ।
यत्षोडशकपं स्वर्णं भवेद् व्यक्तं कषोपले ॥१९०॥
तद्वीरीभूय वणिजः पश्येस्तोलयतः करौ ।
गुडपिण्डं तव मुण्डं तरवारितुलास्थितम् ॥१९१॥
तदाकर्ण्योल्लसत्कोपाटोपारुणितलोचनः ।
अभ्यधावल्लसद्भल्लो जैत्रसिंहोऽनुमन्त्रिणम् ॥१९२॥
मन्त्र्यप्यभिमुखं तस्य प्रोन्द्गु(द्गू)तासिरधावत ।
तद्भल्लं चाभिगच्छन्तं चिच्छेद विदुरोन्तरा ॥१९३॥
तयोः खड्गाखड्गि युद्धं रभसात् कुर्वतोरथ ।
छलं लब्ध्वाऽसिना मन्त्री तं निहत्य द्विधाऽकरोत् ॥१९४॥

जितं जितमिति प्रोच्चैर्मन्त्रिणा वन्दिनासिति ।
ध्वनावुच्छलिते शत्रुसैन्यमाशु पलायितम् ॥१९५॥
मन्त्र्यप्युदयनो वैरितरवारिप्रहारतः ।
निःसहाङ्गः पपातोर्व्यां कस्य कालायसं निजम् ।१९६॥
रणं संशोध्य सर्वेऽपि मन्त्रिणः सुभटा अथ ।
तुरङ्गात्पतितं मन्त्रिणं परितोऽमिलत् ॥१९७॥
तं निःश्वसन्तं करुणं क्वणन्तं वीक्ष्य मन्त्रिणम् ।
मन्त्रिणः प्रोचिरे भद्र ! केयं कातरता तव ॥१९८॥
यः स्वामिकार्ये सङ्ग्रामे प्राणांस्त्यजति सेवकः ।
स सूर्यमण्डलं भित्त्वा स्वर्गं याति सुखाकरे ॥१९९॥
तत् त्वं स्वस्वामिनः कार्यं विधाय रणमूर्द्धनि ।
हर्षस्थाने किं कुरुषे विषादं व्यथयाऽर्दितः ॥२००॥
तव घातप्रतीकारोऽगदङ्कारैः करिष्यते ।
नीरुक् भविष्यति भवान् झगित्येव विषीद मा ॥२०१॥
मन्त्र्यूचे निश्चिते मृत्यौ को विषादो विपश्चिताम् ।
विशेषतो मम स्वामिकार्ये मृत्युमुपेयुषः ॥२०२॥
घातव्यथापि न तथा व्यथते मां मनागपि ।
यथा पुनश्चित्तशल्यं दुःखकृद् बाधतेऽधुना ॥२०३॥
किं शल्यमिति तैः पृष्टे मन्त्री प्राह यथा मया ।
श्रीशत्रुञ्जयतीर्थेशप्रासादोऽस्ति चिकीर्षितः ॥२०४॥
मनोरथोऽयं चित्तस्थो योऽभून्मयि मृतेऽथ सः ।
तथैव विलयं याता शल्यमेतदिदं मम ॥२०५॥
मन्त्रिणः प्रोचिरे मन्त्रिन्नस्मिन्नर्थे विषीद मा ।
वाग्भटस्तव पुत्रोऽस्ति शक्तस्त्वदृणमोचने ॥२०६॥
पुत्रः पितुर्ऋणं दत्ते इति नीतिगतं वचः ।
ततस्त्वद्वाञ्छितं चैत्यं कारयिष्यति वाग्भटः ॥२०७॥

वाग्भटं प्रेरयिष्यामस्तव पुत्रं तथा वयम् ।
पूर्णीकरिष्यति यथा शीघ्रं तव मनोरथम् ॥२०८॥
तैरित्युक्ते स मन्त्रीशः प्रमदापूर्णमानसः ।
अवदत्तदहं जज्ञे कृतार्थ इयता ननु ॥२०९॥
मन्त्री प्रोवाच मे नूनमायुः स्वल्पं तदौषधैः ।
न विधाप्यः प्रतीकारो धर्म एवाधुनौषधम् ॥२१०॥
तन्नो ! निर्यामकं कश्चिद् यतिमानय तद् द्रुतम् ।
आददेऽहं यथा तस्मात् पारलौकिकशम्बलम् ॥२११॥
तैस्तदा कटके कोऽपि नोपलेभे तपोधनः ।
आनीतो मुण्डितो वण्ठः कारितः व्रतवेषभाक् ॥२१२॥
मन्त्री तु तं सत्यसाधुं मन्वानो भावनान्वितः ।
प्रणम्य तत्पुरोऽकार्षीत् पर्यन्ताराधनं स्वयम् ॥२१३॥
समाधिना शुभध्यानी परमेष्ठिनमस्कृतीः ।
स्वयमेवोच्चरन् प्राणांस्त्यक्त्वा स्वर्गमवाप सः ॥२१४॥
वण्ठोऽपि तं साधुलिङ्गं चिन्तामणिमिवानघम् ।
न मुमोच दुरापं स प्राप्यानाभोगतोऽपि हि ॥२१५॥
कस्यापि स्वगुरोः पार्श्वे गत्वा दीक्षामुपाददे ।
विधिवत् पालयामास स व्रतं विशदाशयः ॥२१६॥
विधाय देहसंस्कारं मन्त्रिणोऽपि हि मन्त्रिणः ।
न्यवेशयन् शेल्लहस्तं सुराष्ट्रासु नृपाज्ञया ॥२१७॥
अन्ये ससैन्याः सर्वे मन्त्रिणः पत्तने पुनः ।
आययुर्नृपतेर्जैत्रसिंहसर्वस्वमार्पयत् ॥२१८॥
भूपोऽप्युदयनमृत्ये(त्या) तमुपेतमुपायनम् ।
सम्यग् नालोकयन्मन्त्रिदुःखसाश्रुविलोचनः ॥२१९॥
नृपोऽपि प्राभृतं सर्वं प्रसादीकृत्य वाग्भटे ।
स्वाम्युदयनोद्धृढां मुद्रां मुद्रिलदुर्जनाम् ॥२२०॥

मन्त्री मुद्रां नृपगुरोर्लब्ध्वा सिद्धिकरीं जने ।
समभूद् गोषस्थानं (?) दुष्टनिग्रहकार्यपि ॥२२१॥
वाग्भटस्यान्यदा तेऽपि मन्त्रिणः प्रणताः पुरः ।
सर्वं विज्ञपयामासुस्तत्तातोदयनोदितम् ॥२२२॥
वाग्भटोऽपि तदेवानु गृहीत्वाऽभिग्रहद्वयम् ।
स प्रैषीत् ससूत्रधारान् विमलाद्रौ नियोगिनः ॥२२३॥
शुभे मुहूर्ते प्रासादप्रारम्भो विदधेऽथ तैः ।
वत्सरेणैव सम्पूर्णः कलशान्तोऽप्यजायत ॥२२४॥
कलशे चटिते तस्मिन् कर्मस्थायिनियोगिभिः ।
सविज्ञप्तिर्नरः प्रैषि तद्वर्धापनिकाकृते ॥२२५॥
मुद्रामुन्मोच्य तं लेखं मन्त्री वाचयति स्म सः ।
ततोऽवगत्य सम्पूर्णं प्रासादं मुमुदेतराम् ॥२२६॥
तस्मै लेखोद्वाहकाय वाग्भटो मन्त्रिनायकः ।
आनन्दोत्पन्नपुलको जिह्वां हेममयीं ददौ ॥२२७॥
नदत्तूर्यत्रिकाकीर्णव्योमभूमण्डलान्तरः ।
नृत्यत्पादकुलो यावत् प्रावर्तत महोत्सवः ॥२२८॥
तावदन्यो लेखकरः शत्रुञ्जयगिरेर्नरः ।
आययौ लेखमादाय मन्त्री स्वयमवाचयत् ॥२२९॥
तत्रास्ते लिखितमेतत् प्रासादो यावताऽजनि ।
सम्पूर्णस्तावता मन्त्रिन् ! प्रास्फुटन्मूलतोऽपि हि ॥२३०॥
तदाकर्ण्य द्विगुणितानन्दो मन्त्रीश्वरोऽभवत् ।
सकलोऽपि सभालोको विषण्णो मन्त्रिणं जगौ ॥२३१॥
मन्त्रिन् ! विषादावसरे हर्षः किं द्विगुणस्तव ।
स प्राह यदिदं जज्ञे मयि जीवति तेन सः ॥२३२॥
द्विधा भविष्यत्येदेव प्रासादो मदनन्तरम् ।
तदा कोऽकारयिष्यत् तं जीवन् कारयिताऽन्वहम् ॥२३३॥

मन्त्रिमन्त्रितमाकर्ण्य सकर्णास्ते सभासदः ।
धूनयन्तः स्वमूर्धानं प्रोचिरे वचनं मिथः ॥२३४॥
धन्यो मन्त्रीश्वरो यस्योल्लसिता मतिरीदृशी ।
यतः पुण्यवतां पुण्यमतिः स्याद्दीर्घदर्शिनी ।२३५॥
ततो मन्त्री सूत्रधारं समाकारयति स्म तम् ।
सोऽपि शत्रुञ्जयगिरेः शीघ्रमेव समाययौ ॥२३६॥
मन्त्रिणाऽप्रच्छ्यसौ सूत्रधारः किमिह कारणम् ।
सद्यो निष्पन्नमात्रो यत् प्रासादोऽयं द्विधाऽभवत् ॥२३७॥
सोऽप्यूचे परितो गर्भगृहस्य भू(भ्र)मिसंयुतः ।
प्रासादः प्रविशद्वायुवलावेशवि(व)शोऽस्फुटत् ॥२३८॥
कथं भ्रमियुतस्तर्हि प्रासादो भवता कृतः ।
इत्युक्ते मन्त्रिणा सूत्रधारः प्राह धियांनिधिः ॥२३९॥
देव ! चेद्भ्रमिसंयुक्तः प्रासादो न विधीयते ।
तदा कारयितु (तुः) वंशो जायते स्वल्पसन्ततिः ॥२४०॥
अथ स्वस्थमनाः प्राह मन्त्री किं सन्ततिः शिवम् ।
जीवं नयति पुण्यं तु स्वर्गमोक्षौ ददाति भोः ! ॥२४१॥
तद् गत्वा मूलतो भूयः प्रासादं निचितं दृढम् ।
विधेहि शाश्वती कीर्तिसन्ततिर्मे भवेद्यथा ॥२४२॥
सूत्रधारोऽपि लब्ध्वास्यादेशं शत्रुञ्जये गिरौ ।
यात्वा स्वल्पदिनैश्चैत्यं सम्पूर्णं निबिडं व्यधात् ॥२४३॥
प्रासादेऽथ सुनिष्पन्ने वाग्भटः प्रोद्भटः श्रिया ।
स्वस्वामिनमनुज्ञाप्य यात्रायां विमलाचले ॥२४४॥
चचाल वाचालिताशाचक्रश्चक्रधराकृतिः ।
निःस्वानध्वनिभिः सूरिमुख्यसंघसमन्वितः ॥२४५॥ [युग्मम्]
तत्रावारितसत्रादिपूर्वकं समहोत्सवम् ।
ऋषभस्थापनं चैत्यप्रतिष्ठां च व्यधापत् ॥२४६॥

महातीर्थेऽत्र प्रासादसमुद्धारच्छलेन सः ।
मन्त्रीशः स्वपूर्वजानामुद्धारं विदधे किल ॥२४७॥
उद्धारे व्ययितास्तिस्रः कोट्यो लक्षत्रयोनिताः ।
वाग्भटेनोद्भटानन्दवशोल्लसितचेतसा ॥२४८॥
एवं विधाय प्रासादसमुद्धारमहोत्सवम् ।
वाग्भटो धर्मकार्याणि राजकार्याणि चाकरोत् ॥२४९॥
पञ्चमोऽत्र महातीर्थे समुद्धारकरोऽजनि ।
तीर्थोद्धारकराः पञ्च त एते विश्रुता क्षितौ ॥२५०॥
तद्भो ! शत्रुञ्जयगिरौ विद्यमाने न किंचन ।
आस्ते विनष्टं तीर्थस्योद्धृतिकृत् तु विलोक्यते ॥२५१॥
एवं गुरूदितं श्रुत्वा प्राञ्जलिर्देशलोऽवदत् ।
अयं गिरिर्महातीर्थमिदानीं विदितं मया ॥२५२॥
तदहं कारयिष्यामि प्रभो ! तीर्थसमुद्धृतिम् ।
यतः समग्रसामग्री साम्प्रतं वर्तते मम ॥२५३॥
भुजाबलं धनबलं पुत्राणामपि मे बलम् ।
सुहृद्बलं नृपबलं दानशक्तिस्तथोत्तमा ॥२५४॥
सत्यामेवं सर्वशक्तौ त्वत्प्रसादबलं यदि ।
भवेत्सहायं तदहं कारयामि समुद्धृतिम् ॥२५५॥
श्रीसिद्धसूरयोऽप्याहुर्धर्मकर्मसु सर्वदा ।
गुरुप्रसादः प्रवणः कर्तुं साहाय्यमन्वहम् ॥२५६॥
तत्तीर्थस्य समुद्धारं शीघ्रं देशल ! कारय ।
विश्वप्रसिद्धं यदिदं धर्मस्य त्वरिता गतिः ॥२५७॥
गुरुप्रसादमासाद्य देसलः साधुसत्तमः ।
गृहे गत्वा समरस्य सूनोराख्यन्निजेप्सितम् ॥२५८॥
सोऽपि श्रुतिपुटाभ्यां तत्पीयूषमिव पैतृकम् ।
निपीय वचनं सद्यः प्रीति(त)चित्तोऽजनि समरः ॥२५९॥

व्यजिज्ञपदिदं तात ! ददस्वादि(दे)शमाशु मे ।
साधयामि यथा तीर्थोद्धारमस्मि समाहितः ॥२६०॥
सुतः स एव यः कार्यो(र्यां)नसि धौरेयतां व्रजन् ।
विधाय सारथिं तातं पारं नयति तद्धुरम् ॥२६१॥
देसलोऽथ समरसिंहं सुतं सिंहपराक्रमम् ।
विज्ञाय भाग्यवन्तं तं तस्मिन् कार्ये नि(न्य)युङ्क्त सः ॥२६२॥
स प्राप्य पितुरादेशं सावधानमनाः समरः ।
गुरुश्रीसिद्धसूरीणां पार्श्वे गत्वाऽनमत् पदौ ॥२६३॥
जवैव मे यथा कार्यसिद्धिः स्यादचिरा यदि ।
प्रभो ! प्रसादमाधाय तथोपायः प्रदर्श्यताम् ॥२६४॥
श्रीसिद्धसूरयोऽप्याहुरुपायः श्रूयतामिह ।
यदात्मनो विधीयेत गाढाभिग्रहयन्त्रि(न्त्र)णा ॥२६५॥
तत् श्रुत्वा समरः साधुरुच्चचार गुरोः पुरः ।
अभिग्रहानिति गृहावेशक्लेशाविविक्तधीः ॥२६६॥
ब्रह्मव्रतं पालयिष्ये द्विर्भोक्ष्यामि न वासरे ।
खली-तैल-जलैः स्नानं नाधास्ये मिलितैस्त्रिभिः ॥२६७॥
एकां विकृतिमादास्ये शयिष्ये च क्षितावहम् ।
यावन्न पूर्णतां नीता शत्रुञ्जयसमुद्धृतिः ॥२६८॥ [युग्मम्]
आदाय प्रभुपादान्ते साधुरेतानभिग्रहान् ।
जिनमन्दिरमागत्य तातमेवं व्यजिज्ञपत् ॥२६९॥
तात ! श्रीमन्तमलपखानं सन्तोष्य नायकम् ।
आददेऽहं स्फुरन्मानं तीर्थस्योद्धृतिहेतवे ॥२७०॥
तदादिश यथा सारोपायनैस्तोषयामि तम् ।
नृपप्रसादः कार्यस्य सिद्धौ यन्मुख्यकारणम् ॥२७१॥
कुरु स्वैरं वत्स ! यत्ते रोचतेऽत्र शुभायतिः ।
यतः प्रमाणं सर्वत्र त्वमेव विहितो मया ॥२७२॥

ततः श्रीसमरसिंहोऽलपखानमुपायनैः ।
मणि-मुक्ताफल-स्वर्ण-वसना-भरणादिभिः ॥२७३॥
अन्यैश्च विविधैर्वस्तुनिकरैरात्मना सह ।
गृहीतैर्गूर्जरोर्वीशमाशिश्रिये शुभे दिने ॥२७४॥ [ युग्मम् ]
तं निरीक्ष्यालपखानो भूपतिः समरमागतम् ।
मुमुदे नितरां यद्वा तदासौ को न माद्यति ॥२७५॥
हस्तमुल्लास्य सोल्लासं प्रोचे प्रोच्चैः स्वरं नृपः ।
आगच्छागच्छ भो भ्रातः ! शीघ्रं शीघ्रमिहाग्रतः ॥२७६॥
निरीक्ष्य तं स्वामिहर्षमादरं च तथाविधम् ।
साधुस्तं शकुनं मेने कार्यसिद्धेर्विधायकम् ॥२७७॥
प्राभृतानि पुरस्तस्य सद्यः साधुरढौकयत् ।
विलोक्यालपखानोऽपि ढौकनं मुमुदेतराम् ॥२७८॥
प्रसन्नोऽलपखानोऽपि प्रोचे भ्रात ! कथं वद ।
उपायनमिदानीं मे विहितं भवता महत् ॥२७९॥
भवान् मे सदाऽभीष्टो सदादिष्टविधायकः ।
अवारितागमस्तत्र तत्सखे ! वद कारणम् ॥२८०॥
प्रणम्य समरः प्रोचे प्रसन्नश्चेद् भवान् विभो !
याचितं दास्यते तदा याचे किञ्चिन्मनीषितम् ॥२८१॥
सोऽप्याह समर ! त्वत्तो नापरः स्वसुतोऽपि मे ।
संमतोऽस्ति ततः स्वैरं निर्विचारं विमार्गय ॥२८२॥
अथ विज्ञपयामास समरः साधुपुंगवः ।
स्वामिस्तव बलैर्भग्नं तीर्थं नो विमलाचले ॥२८३॥
तीर्थेऽत्र विद्यमाने यत् समस्ता हिन्दुका जनाः ।
यात्रां कृत्वा धर्महेतोर्व्ययन्ति स्म धनं निजम् ॥२८४॥
तत्र गत्वा च दीना[न्]नृन् दुःस्थितानपि भोजनैः ।
हिन्दुकास्ते प्रयन्ति स्म सर्वदा सर्वकामितैः (?) ॥२८५॥

तदादिश यथा तीर्थस्योद्धारं कारयाम्यहम् ।
भञ्जनाद् घटना[द्] वाऽपि त्वं नवीनो विधिर्भव ॥२८६॥
श्रीमानलपखानोऽपि प्रीतिमान् समरोपरि ।
उवाच वाचं तुष्टोऽस्मि विधेहि स्वमनीषितम् ॥२८७॥
तुष्टोऽसि यदि तत्स्वामिन्! स्फुरन्मानं समर्पय ।
निष्प्रत्यूहं यथा मे स्यात् कार्यमित्याह स स्मरः ॥२८८॥
स गूर्जरधराधीशो वहिरामाभिधं ततः ।
आदिशन्मलिकं साधोः स्फुरन्मानस्य साधने ॥२८९॥
विशेषतरतस्य साधुः प्राणेभ्योऽभ्यधिकः प्रिय ।
अतः प्राप्य स आदेशं तत्र कार्यं मुदं दधौ ॥२९०॥
देवतायतने गत्वा वहिरामो नृपाज्ञया ।
साधो[ः] शीघ्रं स्फुरन्मानं स्फुरन्मानमलेखयत् ॥२९१॥
विलेखितं स्फुरन्मानं स्वमादाय सादरः ।
वहिरामः साधुयुक्तः खानपार्श्वमुपाययौ ॥२९२॥
खानोऽपि स्वकरे कृत्वा स्फुरन्मानं सुलेखितम् ।
वाचयित्वा स्वयमेव वहिरामं पुनर्जगौ ॥२९३॥
तसरीफां शिरस्त्राणसहितां स्वर्णनिर्मिताम् ।
मणिमौक्तिकसंयुक्तां शीघ्रं कोशात् समानय ॥२९४॥
सोऽपि कोशात् समादायालपखानकरे ददौ ।
खानोऽपि समरायादात् ताम्बूलपुरस्सरम् ॥२९५॥
स्वयं साधुकरे खानः स्फुरन्मानं वितीर्य तम् ।
उवाच निर्भयः स्वीयं साधो! साधय वाञ्छितम् ॥२९६॥
पतित्वा पादयोः साधुस्तत्सरीफां मुदा सह ।
शीघ्रं परिदधाति स्म शिरस्त्राणं च सादरः ॥२९७॥
न्यस्य शीर्षे स्फुरन्मानं स्मरसाधुः प्रणम्य च ।
इति विज्ञपयामास स वासवगुरुर्धिया ॥२९८॥

स्वामिंस्तव स्फुरन्माने पार्श्वपञ्चानने सति ।
भयं न दुष्टलोकेऽपि विभुभ्योऽपि मम क्वचित् ॥२९९॥
त्वत्प्रसादप्रवहणं संप्राप्य निभृतस्थितिम् ।
कार्यपारावारपारं प्रयास्यामि झटित्यहम् ॥३००॥
जात्यवाजिनमानाय्योच्चैःश्रवसमिवापरम् ।
श्रीमानलपखानोऽथ साधवे तं वितीर्णवान् ॥३०१॥
खानाज्ञया बहिरामः साधुमश्वेऽध्यरोपयत् ।
तस्यावासप्रवेशाय स्वयमेव सहाचलत् ॥३०२॥
वादित्रैर्वाद्यमानैः स पठद्भिर्वन्दिभिः पुरः ।
बहिरामयुतः साधुः साक्षादिव दिवस्पतिः ॥३०३॥
राजमार्गे राजलोकैः पौरलोकैश्च सर्वतः ।
स्तूयमानः पूज्यमानो नारीभिश्चन्दनाक्षतैः ॥३०४॥
अभ्युद्गतः संघमुख्यैः पुरुषैः सोत्क(त्क)मानसैः ।
प्रविवेश निजावासं स्वस्वस्त्रीकृतमङ्गलः ॥३०४॥
[ त्रिभिर्विशेषकम् ]

मलिकं श्रीबहिरामं स्वबान्धवमिवागतम् ।
विविधोपायनैः साधुस्तोषयित्वा वि(व्य)सर्जयत् ॥३०६॥
अथ श्रीसिद्धसूरीणां पदद्वयं विवंदिषुः ।
साधुः सपौरलोकोऽपि पौषधागारमागमत् ॥३०७॥
अथ प्रभुपादौ नत्वा लब्ध्वा(ब्धा)शीर्वचनः समरः ।
तीर्थोद्धारस्फुरन्मानप्राप्तिमाख्यद् गुरोः पुरः ॥३०८॥
गुरुरप्याह जागर्ति तव भाग्यमभङ्गुरम् ।
देवद्वेष्यपि खानोऽसौ यदत्रानुमतिं ददौ ॥३०९॥
तीर्थोद्धारविधौ साधो ! शीघ्रं कुरु समुद्यमम् ।
धर्मलाभानुभावेन सिद्धिरस्त्वविलम्बिता ॥३१०॥
अथ व्यजिज्ञपत्साधुः श्रीवस्तुपालमन्त्रिणा ।

मम्माणशैलफलही पूर्वमानायिताऽस्ति यत् ॥३११॥
तेनैव सा भूमिगृहे विन्यस्ताऽद्यापि विद्यते ।
अक्षताङ्गाऽतस्तामेव किं प्रभो! कारये भ(न)वाम् ॥३१२॥
सूरयोऽपि समाकार्य देशलं पुण्यपेशलम् ।
आदिशन्निति तस्याग्रे सपुत्रस्यापि सादरम् ॥३१३॥
येयं पुरा समानीता मम्माणफलही वरा ।
मन्त्रिणा विद्यते सा तु संघोत्सङ्गे निवेशिता ॥३१४॥
चतुर्विधस्य संघस्य गृहीत्वाऽनुमतिं ततः ।
एतया कार्यते बिम्बं तीर्थेऽस्मिन्मूलनायकम् ॥३१५॥
सर्वाणि धर्मकार्याणि संघसांनिध्यतः सदा ।
सफलानि भवन्त्यत्र विशेषात्तु तदीक्ष्यते ॥३१६॥

इति निशम्य गिरां स्वगुरूदितां
ससमरोऽपि सपद्यथ देशलः ।
अगमदायतियोगविमर्शनो-
त्सुकमनाः सुमना निजमन्दिरम् ॥३१७॥

इति श्रीशत्रुञ्जयमाहात्म्यवर्णनो नाम तृतीयः प्रस्तावः ।



# अथ चतुर्थः प्रस्तावः ।



अथान्यदा मुदा युक्तः समस्तान् सूरिपुंगवान् ।
उपासकान् संघमुख्यानपि साधुरमीलयत् ॥१॥
सूरिप्रमुखसंघस्य श्रीमतोऽरिष्टनेमिनः ।
मन्दिरे समरो भक्त्या यथा युक्त्या न्यवेशयत् ॥२॥
प्रणम्य पुरतः स्थित्वा प्राञ्जलिर्जल्पति स्म सः ।
अवधारयतां संघो विज्ञप्तिं कुरु(वे)तो मम ॥३॥
श्रीशत्रुञ्जयतीर्थेशोच्छेदो म्लेच्छविनिर्मितः ।
कलिकालवशाज्जज्ञे धर्मवैरी सदा स यत् ॥४॥
ततस्तस्मिन् समुच्छिन्ने तीर्थेऽस्मिन् तीर्थनायके ।
उपासकानां सर्वेऽपि धर्मा अस्तमिता भुवि ॥५॥
तीर्थाभावे भावयुक्ता कथं कथमुपासकाः ।
आराधयिष्यन्ति द्रव्यस्तवं तदधिकारिणः ॥६॥
चतुर्विधेऽपि धर्मेऽस्मिन् मुख्यतां भावनाऽश्नुते ।
प्रभावना ततोऽपि स्यात् श्रेष्ठा श्रेयस्तरोः पयः ॥७॥
जायते सा च यात्रायां यात्रा स्यात् तीर्थपे सति ।
अतस्तीर्थाधिपं संघानुज्ञया कारयाम्यहम् ॥८॥
मन्त्रिणा वस्तुपालेन याऽस्ति मम्माणखानितः ।
आनीता फलही भूमिगृहे सा विद्यतेऽक्षता ॥९॥
सा च संघसमुत्सङ्गे पुरा न्यस्ताऽस्ति मन्त्रिणा ।
संघादेशेन तामेव घटयाम्यथवा परम् ॥१०॥
आचार्यवर्याः संघस्य पतयः श्रावका अपि ।
साधूदितं मिथः सर्वे पर्यालोच्याऽवदन्निति ॥११॥

साधो समर! निस्सीमभीमकालोष्मतापिते ।
सुधातडागवद् विश्वे भवानेव विराजते ॥१२॥
कलिदानवसैन्येन विध्वस्तानमरानपि ।
गतप्राणानात्मशक्त्या संजीवयतुमिच्छति ॥१३॥
साधो! पुण्यवतां धुर्यो देशलः परिगीयते ।
कलिकालेऽपि यस्य त्वं तीर्थोद्धारचिकीः सुतः ॥१४॥
रत्नभूताऽपरामियं मम्माणफलही पुरा ।
मन्त्रिणाऽस्ति समानीता प्रभूतद्रविणव्ययात् ॥१५॥
तदस्याः समयो नैव कारयित्वा निवेशने ।
कलिः कृतान्त इव यद्दीयते रत्नदूपकः ॥१६॥
तदियं तिष्ठतु तथा यथाऽस्ति स्थापिता पुरा ।
आरासनफलहिकां तत्त्वं कारय नूतनाम् ॥१७॥
संघादेशं निशम्यासौ शिरस्यारोपयत्करौ ।
तत्स्वभाग्यगृहद्वारे तोरणं रचयन्निव ॥१८॥
ऊचे च संघस्यादेशः प्रमाणं सर्वथा मम ।
जिनानामपि मान्यो यत्संघः किमुत मादृशाम् ॥१९॥
एवं संघसमादेशं प्राप्य प्राप स्वमन्दिरम् ।
देशलस्याग्रतः सर्वं तमादेशं शशंस सः ॥२०॥
समरो देशलादेशादारासनखनेर्जिनम् ।
आनाययित(तुं) प्राहै(प्रै)षीन्नरानादेशकारिणः ॥२१॥
अथ ते समरविज्ञप्तिमारासनखनिप्रभोः ।
योग्यामादाय मुदाऽचलन् प्राभृतसंभृताः ॥२२॥
तेऽथ त्रिसंगमपुरं देशाधीशसमाश्रयम् ।
अवापुरचिरेणैव समुत्साहरथस्थिताः ॥२३॥
जन्मतोऽपि न यो मांसं विजयां मदिरामपि ।
नाभक्षयत् स्वयं देशेऽप्यपरेभ्यो न्यायचरत् ॥२४॥

यो न हन्ति त्रसं सत्त्वं स्वजीवमिव सर्वदा ।
राज्येऽपि यस्य कश्चिन्नो बोधको लभते स्थितिम् ॥२५॥
यस्याज्ञया लघुं छागं सैरिभं वा न कश्चन ।
हन्तुं लेभे तथा यूकां शय्यां च धर्तुमातपे ॥२६॥
द्यूतस्थानेऽपि सारीभिः क्रीडन्तः कितवा अपि ।
मारयामीति न गिरं गृणन्ति स्म कदाचन ॥२७॥
वाजिनोऽपि पिबन्त्यस्य जलं गलनगालितम् ।
विद्यन्ते साधवस्त्वेके पञ्चपा(श्चेषू?)नां विघातकाः ॥२८॥
दिन एव सदा योऽयमेकमत्तीति भोजनम् ।
माहेश्वरोऽपि सन् जैनधर्मदृढमतिस्थितिः ॥२९॥
स तत्र श्रीमहीपालदेवः पालयति प्रजाम् ।
नवः कुमारपालोऽयमिति ख्यातिमवाप यः ॥३०॥ [सप्तभिः
गम्भीरप्रकृतिस्तस्य समुद्रो मन्त्रिनायकः । कुलकम्]
पाताळयोऽस्ति चित्रं यो न दोषाकरवल्लभः ॥३१॥
समरस्य नरा लात्वा विज्ञप्त्या सह ढौकनम् ।
श्रीमहीपालदेवस्य दर्शनायागमन्नमी ॥३२॥
राणकस्य महीपालदेवस्य प्रणता पुरः ।
उपायनमुपानीय विज्ञप्तिं ते समर्पयन् ॥३३॥
मन्त्रिमुख्योऽपि सहसा गृहीत्वा विज्ञप्तिं करे ।
श्रीराणकस्य समादेशादुच्चैः स्वरमवाचयत् ॥३४॥
तदर्थमवगम्याथ श्रीमहीपालराणकः ।
संभूतपुरुहूतश्रीरिव हृष्टमना जगौ ॥३५॥
धन्यः समरसिंहोऽयमस्य जन्म फलेग्रहि ।
यस्यास्ति कलिकालेऽपि मतिः कृतयुगानुगा ॥३६॥
धन्योऽहमपि यस्यास्ति खनिरारासणाश्मनाम् ।
अन्यथा कथमत्रार्थे भवेयं स्मरणोचितः ॥३७॥

साधोरुपायनमिदं पाताकसचिवाखिलम् ।
प्रतीपसर्पय कथं पुण्यार्थं गृह्यते धनम् ॥३८॥
धनेन परिवारेण जीवितेनापि योज्यते ।
धर्मः प्राभृतमात्रेण स कथं हार्यते मुधा ॥३९॥
तथा यो गृह्यतां खानेर्बिम्बानां दलपाटकम् ।
विभागो भूपतेरस्ति मुक्तः सोऽपि मयाऽधुना ॥४०॥
यत्किञ्चिदपि कार्येऽस्मिन् क्रियमाणे विलोक्यते ।
तत्र तत्र भलिष्यामि पुण्यांशोऽस्तु ममापि हि ॥४१॥
इत्युदीर्य महीपालः समं समरपुरुषैः ।
पाताकमन्त्रिसहित आरासनखनिं ययौ ॥४२॥
तत्र सूत्रधारान् सर्वान् दलपाटककारिणः ।
समाहूय ससन्मानं बिम्बमूल्यमकल्पयत् ॥४३॥
यथेप्सितं याचितेऽर्थे सूत्रधारैः ससादरः ।
अनुमेने महीपालदेवस्तदाधिकं पुनः ॥४४॥
शुभे वारे शुभे लग्ने शुभे भे च महीपतिः ।
आरम्भं कारयामास खानिपूजापुरस्सरम् ॥४५॥
सुवर्णाभरणैर्वस्त्रैस्ताम्बूलैर्भोजनैरपि ।
तदा समरनराः सर्वसूत्रधारानमानयन् ॥४६॥
तथा दानं ददुः साधुसमरादेशकारिणः ।
यथेप्सितं याचते(के)भ्यो जायमाने महोत्सवे ॥४७॥
आसूत्रयन्नवारितसत्राका(गा)रमसौ नराः ।
योगिकार्पटिकादीनां चिन्तामणिमिवापरम् ॥४८॥
आरम्भं कारयित्वाऽथ तत्र संस्थाप्य मन्त्रिणम् ।
स्वयं श्रीमान्महीपालस्त्रिसंगमपुरेऽगमत् ॥४९॥
प्रत्यहं प्रेषितनृणां यातायातैर्महीपतिः ।
समरोऽपि वेत्ति शुद्धिं शिक्षां प्रेषयति स्म च ॥५०॥

आरेभिरे सूत्रधाराः खनितुं खनिमुद्धराः ।
स्वल्पैरहोभिरेवैते फलही(हीं)निरसारयन् ॥५१॥
आर्द्रीकृत्य जलैर्यावत् फलहीमालुलोकिरे ।
तावत्स्फुटितरेखां ते ददृशुर्मध्यसंस्थिताम् ॥५२॥
समरोऽपि सदोषां तां ज्ञात्वाऽऽयातनरैस्ततः ।
नवीनायाः कारणाय शिक्षां स प्रैषयत् पुनः ॥५३॥
तेऽपि पूर्वमिवोद्धर्तुं खनेरारभतेऽथ ताम् ।
आशु यावत् प्रादुरासीत् स्फुटिता सा द्विधाऽभवत् ॥५४॥
अथ राणकमन्त्रीशस्तेऽपि साधुनियोगिनः ।
विधिणा(पण्णा)अष्टमतपः कृत्वाऽऽसन् कुशसंस्तरे ॥५५॥
तृतीयस्यां निशीथिन्यां साक्षाच्छासनदेवता ।
यक्षः कपर्दी चागत्य मन्त्रिणं तौ जजल्पतुः ॥५६॥
भो ! भो ! मन्त्रीश्वर ! भवानुपासकशिरोमणिः ।
जैनधर्मस्य विज्ञोऽपि कथमज्ञ इवाभवत् ॥५७॥
आवां साधर्मिको मन्त्रिन्नसंस्मृत्य भवानपि ।
आरम्भं विदधे तत्किं कर्तुमेवं तवोचितम् ॥५८॥
परं समरसिंहस्य भाग्यमेकमभङ्गुरम् ।
प्रमाणमत्र सर्वत्र वर्तते कार्यसिद्धये ॥५९॥
खनेः प्रदेशादस्मात् तद्बिम्बमाकृष्यतामिति ।
उक्त्वा प्रदर्श्य तत्स्थानं तावप्यन्तर्हितौ क्षणात् ॥६०॥
प्रातः कपर्दिनमथो मन्त्री शासनदेवताम् ।
पूजयित्वा समं साधुनरैरकृत पारणम् ॥६१॥
तदेव देवकथितं खनेः स्थानमथान्यदा ।
सूत्रधाराः खनयितुमारभन्त मुदा सह ॥६२॥
देवानुभावादेवात्र ताव[त्]सूत्रभृता करैः ।
लग्नमात्रैरपि स्यान्निःससार शिलातलम् ॥६३॥

निशाकरकरस्वच्छं स्फाटिकोपलसंनिभम् ।
समरपुण्यमिवाध्यक्षमपश्यंस्ते शिलातलम् ॥६४॥
विधाय सलिलस्विन्नं निर्णीय गतदूषणम् ।
शिलातलं सूत्रधाराश्चक्रुः फलहिकां ततः ॥६५॥
मन्त्रीश्वरः समरस्य विज्ञप्तिसहितं नरम् ।
प्राहिणोत् फलहीकार्यसिद्धिशुद्धिविधायकम् ॥६६॥
पत्तनं समुपेत्याश्व(त्याशु) देसलं सुतसंयुतम् ।
नरो वर्धापयामास फलहीसिद्धिसूचनात् ॥६७॥
देसलोऽपि सुतेनासौ पट्टसूत्राम्बरद्वयम् ।
आदापयद्धेममयीं रसनां दशनान्विताम् ॥६८॥
आचार्यवर्यानाकार्य साधून् साध्वीरुपासकान् ।
उपासिकाश्च संमील्य स आरेभे महोत्सवम् ॥६९॥
प्रधानवसनैश्चित्रैः सुवर्णाभरणैरसौ ।
ताम्बूलकुसुमैः संघं यथायोग्यमुपाविशत् ॥७०॥
वन्दिनो गायनान् पादकुलान्यपि समन्ततः ।
अमानदानैर्निखिलानर्थिनः समतोषयत् ॥७१॥
वर्द्धापनं विधायैवं पुनः संघपुरः करौ ।
संयोज्य देसलः साधुरिति विज्ञापनां व्यधात् ॥७२॥
संघादेशप्रसादेन मूलनायकमूर्त्तये ।
निष्पन्ना फलही तावदियं दूषणवर्जिता ॥७३॥
तदेतया कारयामि बिम्बं वा मन्त्रिसत्कया ।
संघः प्रसादमाधाय समादिशतु मां पुनः ॥७४॥
संघः पूर्वोदितमेव तस्मै प्रत्युत्तरं ददौ ।
सतां पाषाणरेखेव नान्यथा वचनं भवेत् ॥७५॥
तदाहुः संघपुरुषाः साधो समर ! साम्प्रतम् ।
सर्वा देवकुलादीनां परठा(?) क्रियतामपि ॥७६॥

प्रासादोऽपि यतो मुख्यो म्लेच्छैरस्ति विनाशितः ।
परतो देवकुलिका अपि तस्य निपातिताः ॥७७॥
तद्विभज्य यथायोग्यं सर्वेषां पुण्यहेतवे ।
कर्मस्थाय करणाय शिक्षां संघः प्रयच्छतु ॥७८॥
तत्रोचे पुण्यवान् कोऽपि प्रासादस्य समुद्धृतिम् ।
मुख्यस्य कारयिष्येऽहं यच्छतानुमतिं मम ॥७९॥
संघः प्रोचे बिम्बकर्ता योऽस्ति सोऽस्यास्तु कारकः ।
यस्य भोज्यं हि तस्य स्यात् ताम्बूलमपि युक्तिमत् ॥८०॥
तस्मिंस्तथैव निर्णीते संघेनापि मुदा समम् ।
विभज्य किञ्चित्केषांचिद्धर्मकृत्यमदीयत ॥८१॥
प्रमाणीकृत्य सर्वेऽपि संघं सङ्घोदितं मुदा ।
तत्तद्विधापनोद्युक्ताः स्वं स्वं गृहमुपाययुः ॥८२॥
संघस्य साधुरादेशं प्राप्यादेशमिव प्रभोः ।
नियोगादपरानन्दमन्दिरं देशलोऽभवत् ॥८३॥
भूयोऽपि प्रैषयत् साधुर्धनं शिक्षां च मन्त्रिणः ।
आरभ्यैवंविधं कार्यं को गणयत्युपक्षयम् ॥८४॥
पाताकोऽपि सूत्रधारान् स्वर्णकंकणवाससाम् ।
दानेन तोषयामास निर्गतेऽस्मिन् शिलातले ॥८५॥
श्रुत्वा श्रीमान् महीपालदेवो बिम्बविनिर्गमम् ।
वर्धापयितुं स्वपुरात् खनिं हर्षादुपागतः ॥८६॥
मन्यमानो महीपालः प्रत्यक्षमिव तं जिनम् ।
अर्चयामास कालेय–घनसार–सुमादिभिः ॥८७॥
दीयमानमहादानं नृत्यत्पादकुलं मुदा ।
स ताम्बूलसिलल्लोकं राणकोऽकारयन्महम् ॥८८॥
अथो गिरेस्तामुत्तार्य सूत्रधारैः स सादरम् ।
आरासने महीपालस्तत्प्रवेशमहं व्यधात् ॥८९॥

आरासनसमासन्नग्रामेभ्योऽभ्येत्य भाविनः ।
फलहीमपि तां पुष्पकर्पूराद्यैरपूपुजत् ॥९०॥
गीतगानैर्महाध्वानैर्वादित्रैर्वादितैरपि ।
हर्षकोलाहलैश्चक्रुः शब्दाद्वैतमुपासकाः ॥९१॥
दत्त्वाऽथ निखिलां शिक्षां पाताह्वाय स्वमन्त्रिणे ।
राणकः श्रीमहीपालदेवः स्वपुरमाययौ ॥९२॥
अथो रथोद्भटे मन्त्री समारोप्य शिलामिमाम् ।
परतः पृष्ठतो रज्जुविलग्नैर्बहुभिर्नरैः ॥९३॥
आकृष्यमाणां तरसा सबलैर्धवलैरपि ।
पदे पदे खन्यमाने सकुद्दालनरैः पथि ॥९४॥
अत्रुटत्तैलधाराभिर्निपतन्तीभिरक्षयोः ।
महतोपक्रमेणाथ पर्वतादवतारयत् ॥९५॥ [त्रिभिर्विशेषकम्]
कुमारसेनाग्रामस्योपवने समभूमिके ।
रथोद्भटस्तिष्ठति स्म स न याति यतोऽग्रतः ॥९६॥
तत्र त्रिसङ्गमपुरप्रमुखस्थानवासिनः ।
सङ्घाः समेत्य सस्पर्द्धं महोत्सवमकारयन् ॥९७॥
मन्त्री कुमारसेनायामागतो(ता)फलहीति सा ।
साधवे शुद्धिमाख्यातुं पत्तने प्रैषयन्नरम् ॥९८॥
समरोऽपि तद्विज्ञप्तेरवगत्य समागताम् ।
फलहीं स शिखण्डीव हृष्टो मेघध्वनेरभूत् ॥९९॥
अथ सर्वत्र धौरेयवृषभानयनाय सः ।
प्रैषयत्स्वनरांस्तेऽपि प्रतिग्रामं व्यलोकयन् ॥१००॥
स्वेषु ग्रामेषु यो यस्य वृषभः सबलोऽभवत् ।
समस्तोऽपि[च]तं स्वं स्वं समादाय समागमत् ॥१०१॥
कौटुम्बिका राजपुत्रा द्विजातय उपासकाः ।
सस्पर्द्धं ढौकयन्ति स्म स्वान् स्वान् वृषभानमी ॥१०२॥

दीयमाने महामूल्ये वृषभाणां स्मरसाधुना।
मिथ्यादृशोऽपि पुरत· प्रत्युत्तरमिदं ददुः ॥१०३॥
धन्येयं गूर्जरधरा यत्र साधुशिरोमणि ।
निवाससास्त्वत्रयसे सूत्रभृद् धर्मवेश्मनः ॥१०४॥

(बिम्बार्थं फलहेरानयनम्।)

त्वां विना कथमिदानीं काले म्लेच्छविनाशितम्।
शत्रुञ्जयमहातीर्थमेतदायास्यदुद्धृतिम् ॥ १०५ ॥
धन्या ते जननी यस्या रत्नं रोहणभूरिव ।
कुक्षिः सूते स्म तनयं भवन्तं विश्वभूषणम् ॥१०६॥
धन्यस्ते देशलस्तातो यस्य तनुर्भवादृश· ।
कलिकूपे निपतन्तं धर्ममुद्धरति स्म य· ॥१०७॥
लोकोत्तरचरित्रस्य दर्शनेनापि ते वयम् ।
कृतार्थाः स्मभूमात्र पुण्यं यद्दर्शनं सताम् ॥१०८॥
वृषकार्यं वृषा एते गृह्यन्तां बलशालिनः ।
सदृशां सदृशैर्योगो लोकख्यातो भवत्वयम् ॥१०९॥
मूल्येन न धनेनापि प्राप्य तेऽत्र प्रयोजनम् ।
न क्रीणात्यरघट्टं कोऽपि पोलिकयैकया (या?) ॥११०॥
सर्वेषामेकमेवोक्तं स विचार्य विचारवित् ।
धौरेयान् वृषभाँस्तेभ्यो सद्यो स(ज) ग्राह विंशतिम् ॥१११॥
वृषभान्नाददे येषां ते विलक्षा इवाभवन् ।
सौरभेयाधिपतयो भग्नाशा इव याचकाः ॥११२॥
वीक्ष्या(क्षा)पन्ना[ न् ]निरीक्ष्यासावनादत्तवृषान्नरान् ।
प्रत्यूचे समरः साधुः सुधामधुरया गिरा ॥११३॥
अहो महानुभावा ! वो विषादो नोचितो यत ।
वृषो वृषानयनेन ध्रुवं युष्माभिरर्जितः ॥११४॥
पुण्यहेतुर्भावनैव युष्मास्वविकलाऽस्ति सा ।
अनुमोदकोऽपि यत्स्याद्दानदातेव तद्विभाक् ॥११५॥

इत्युदीर्य स संमान्याशन-ताम्बूलदानतः ।
समरोऽपि द्विजार्दीस्तान् विससर्ज वृषाधिपान् ॥११६॥
समरः कुमारसेनायां शकटं वृषभानपि ।
मार्गोपचारप्रगुणान् प्रेषयामास पूरुषान् ॥११७॥
मन्त्री तच्छकटं दृष्ट्वा लोहबद्धं दृढं पृथु ।
प्रोन्नतं मुमुदे चारु साक्षाद्रथमिवागतम् ॥११८॥
तस्मिन्न[न]सि ते यावत्फलहीमध्यरोपयन् ।
तावता तत्क्षणाज्जीर्णमिव चूर्णीबभूव तत् ॥११९॥
ततो विषण्णो मन्त्रीशो भूयः समरपार्श्वत. ।
विशेषनिबिडं प्रौढमानाययदनो परम् ॥१२०॥
तस्मिन् तस्यां समारूढमात्रायामपि सत्वरम् ।
अभज्यतानो दैवस्य सहः को वा भरोद्धृतेः ॥१२१॥
पुनर्मन्त्री समरं ज्ञाततदुदन्तं नरैर्व्यधात् ।
अनिर्विन्नः(र्वेदः)श्रियो मूलमिति प्रैषादनो परम्॥१२२॥
तस्मिन्नपि तथाजाते जातचिन्तोऽथ साधवे ।
सविज्ञप्तं नरं शीघ्रं सचिवेशो व्यसर्जयत् ॥ १२३ ॥
समरोऽपि परिज्ञाय तमुदन्तमुपागतम् ।
चिन्तालताजालकान्त पतितो व्याकुलोऽभवत् ॥१२४॥
सर्वदेशेषु दुष्प्रापं प्राप्तं बहुविलोकितैः ।
यच्चदोऽपि भग्नमनस्तदाऽन्यत् कुत्र लप्स्यते ॥१२५॥
रथोद्भटे न पश्य (यात्य?)स्मिन् याति स्कन्धेषु नो नृणाम् ।
मनोरथस्तद्भविता तातस्य सफलः कथम् ॥१२६॥
इति चिन्तावीचिमालिमध्ये साधोर्निमज्जतः ।
अक्ष्णोरपासरन्निद्रा निमज्जनभयादिव ॥१२७॥
समरं चिन्ताचान्तचित्तं वीक्ष्य प्रत्यक्षरूपिणी ।
समेत्य शासनसुरी प्रोचे वत्स ! विषीद मा ॥ १२८ ॥

झंझाग्रामेऽस्ति या देवी त[द्]यात्रार्थं विनिर्मितम् ।
शकटं तिष्ठति सदा देवताऽधिष्ठितं दृढम् ॥१२९॥
अनो ययाति यात्रायां पञ्चाशति नरेष्वपि।
अधिरूढेष्वागव्यूताद् योजितोक्षद्वयेन हि ॥१३०॥
तदिदं शकटं देवी निजभक्तोपढौकत ।
प्रदास्यति स्वयं तेन तव सिद्धिर्भविष्यति ॥१३१॥
देव्यादेशं स सम्प्राप्य मेने स्वं भुवनाधिकम् ॥
मार्गभ्रष्टः पुनर्मार्गं प्राप्य को वा न हृष्यति ॥१३२॥
प्रातस्तातपुरः सर्वं देव्यादिष्टमभाषत ।
सोऽपि मेने भाग्यवन्तं देवीदर्शनत सुतम् ॥१३३॥
शकटस्यानयनाय साधुर्यावदुपक्रमम् ।
कुरुते तावदायातो देवीप्रेषितगोष्ठिक ॥१३४॥
देव्या मम समादिष्टं यद् गत्वा समरं वद ।
समानसा सुखेनैव बिम्बं स्थानं प्रयास्यति ॥१३५॥
तद् गृहाण सुरीदत्तं शकटं भाटकं विना ।
सेत्स्यन्ति तव सर्वेऽर्थाः साधो! देवीप्रसादतः ॥१३६॥
तं देवीगोष्ठिकं साधुः सम्मान्य वसनादिभिः ।
तेनैव सार्धं शकटहेतवेऽप्रेषयन्नरान् ॥१३७॥
शकटं तं समादाय देवताऽधिष्ठितं दृढम् ।
गत्वा कुमारसेनायां मन्त्रिणे ते सम(र्पा)र्पयन् ॥१३८॥
प्रगुणीकृत्य शकटं फलहीपुरतो नरा ।
यावदस्थापयंस्तावत् स्वयमेवोल्ललास सा ॥१३९॥
अत्यल्पेनैव यत्नेन सूत्रधारैरनस्यसौ ।
फलही सा सुखेनैव समारोप्यत मन्त्रिणा ॥१४०॥
फलही वालुकावार्धौ तरीतुं दुस्तरे पथि ।
सुदृढं सारफलकैरनो यानमिवाश्रयत् ॥१४१॥

शुभे मुहूर्ते मन्त्रीशो विंशत्या वृषभैर्युतम् ।
शतेन सहितं नृणां शकटं तमचालयत् ॥१४२॥
ततः पाताकमन्त्रीशः फलहीं समहोत्सवम् ।
स्वयं स्वदेशसीमानं व्यतिक्रम्य न्यवर्तत ॥१४३॥
सरणिं समीकुर्वद्भिः सकुद्दालैर्नरैः पुरः ।
तद्देवप्रेरितमिव चचाल शकटं रयात् ॥१४४॥
स्थाने स्थाने पूज्यमाना वन्द्यमाना पदे पदे ।
क्रमेण फलही प्राप खराळूनामकं पुरम् ॥१४५॥
तत्रागतायां तस्यां प्राक् संघस्तत्पुरसंस्थितः ।
प्रवेशोत्सवमातेने तदर्चनपुरस्सरम् ॥१४६॥
अथ द्वितीये दिवसे फलही पुरतोऽचलत् ।
सम्प्राप सा सुखेनैव भाण्डूग्रामं कियद्दिनैः ॥१४७॥
साधुः समागतां तत्र फलहीं देसलो निजाम् ।
विज्ञाय जज्ञे समुत(द)स्तद्दर्शनसमुत्सुकः ॥१४८॥
तदैव श्रीसिद्धसूरीन् सर्वं पत्तनसंस्थितम् ।
पौरलोकं समादाय स भाण्डूग्राममव्रजत् ॥१४९॥
विलोक्य फलहीं शुद्धां शीतद्युतिसमद्युतिम्
आनन्दाश्रुसुधां साधोश्चक्षुश्चन्द्रोपलोऽगलत् ॥१५०॥
साधुर्लब्धनिधिरिव प्रमोदोत्फुल्ललोचनः ।
पूजां कुंकुम-कर्पूर-चन्दनाद्यैरकल्पयत् ॥१५१॥
गायनानां वन्दिनां च सहस्राणि तदाऽमिलन्
पित्रादेशात् समरोऽपि वस्त्राद्यैस्तानमानयत् ॥१५२॥
लोकोऽपि चम्पका-शोक-केतकी-बकुलादिभिः ।
सुमनोभिः सुमनसा फलहीं तामपूजयत् ॥१५३॥
भाविनि भूतवदुपचारो व्याकरणेष्विदम् ।
वचनं सत्यतां निन्ये तां जिनेति जनोऽर्चयत् ॥१५४॥

नदत्तूर्यरवैर्गीतैर्लोककोलाहलैरपि ।
दिशो मुखरिता रेजुर्गायन्त्य इव देसलम् ॥१५५॥
न बालो न युवा वृद्धः पत्तने न स कोऽपि ना ।
यस्तदानीं तत्र गत्वा फलहीं न व्यलोकयत् ॥१५६॥
सर्वेऽपि देसलं साधुसुतं च समरं जनाः ।
धर्मोद्धारकरत्वेन सुबन्दिन इवास्तुवन् ॥१५७॥
सर्वसाधारणं भोज्यं प्रावर्तयत देसलः ।
साधर्मिकस्य वात्सल्यं चक्रे परमया मुदा ॥१५८॥
सूत्रधारान् मार्गकारान् सार्धं संचारिणो जनान् ।
वृषान् सूतानपि स्वर्णभूषणाद्यैरतोषयत् ॥१५९॥
स्थाने स्थाने सलकुटारत्सेषु (?) त्रोटकोदितम् ।
चच्चरैश्चच्चरीषु गीतां गीतेषु गायनैः ॥१६०॥
गीयमानां सुतैर्भट्टैः पठ्यमानां गुणावलीम् ।
शृण्वन् स्वीयां देशलोऽग्रे फलहीं तामचालयत् ॥१६१॥
चालितायामथो तस्यां देसलः सुतसंयुतः ।
गुरुभिः परलोकैश्चानुगतो गृहमागतः ॥१६२॥ युग्मम्
प्रतिग्रामं प्रतिपुरं प्रतिगोकुलमप्यसौ ।
पूज्यमाना संचचार संघः सस्पर्द्धमागतैः ॥१६३॥
यथा यथा संचचार फलहीयं पुरः पुरः ।
तथा तथाग्रतो नश्यन् निर्नाशमगमत् कलिः ॥१६४॥
नरास्तदनुगा यत्र समे पथि विजानते ।
यास्यति क्रोशाद्धितीं(त)यं शकटं लुठत् ॥१६५॥
तदा देवानुभावेन न याति पदमप्यदः ।
यदा तु विषमे मार्गे प्रोन्नते वालुकाकुले ॥१६६॥
विदन्ति ते क्रोशमात्रो मार्गोऽयं दशभिर्दिनैः ।
आक्रंस्यतेऽपि कष्टेन न वातीद्दापरा नराः ॥१६७॥

तदा सुधालिप्तभूमौ गोलिकेव सुखेन तत् ।
आयासेन विना तेषां याति क्रोशचतुष्टयम् ॥१६८॥
[ चतुर्भिः कलापकम् ]
एवं सा पथि गच्छन्ती पुण्डरीकगिरेरधः । पुंडरीकगिरिं
फलही समुपेयाय पूज्यमाना जनैः तदा ॥१६९॥ फलही
पादलिप्तपुरस्थास्य संघ आगमनोत्सवम् । समुपेयायं।
चक्रे वर्धापनं साधुपरिवारोऽप्यवारितम् ॥१७०॥
अथ वर्धापकनराः समागत्याशु साधवे ।
शत्रुञ्जयगिरौ प्राप्तां शशंसु· फलहीमिमाम् ॥१७१॥
साधुस्तैरेव भूयोऽपि प्रतीपप्रेषितैर्नरैः ।
अध्यारोहाय शैलेऽस्याः शिक्षां प्रेषयति स्म सः ॥१७२॥
सर्ववैज्ञानिकेभ्योऽथ विज्ञान् विज्ञाय षोडश ।
बिम्बस्य घटनायासौ प्रेषयामास पत्तनात् ॥१७३॥
तथा श्रीजीर्णप्राकारात् मण्डलीकमहीभुजा ।
नवसंख्यसुराष्ट्राणामधिपेन य उच्यते ॥ १७४ ॥
'पितृव्य' इति तं साधुर्बालचन्द्राभिधं मुनिम् ।
आनाययन्नरान् प्रेष्य शीघ्रं शत्रुञ्जये गिरौ ॥१७५॥ युग्मम्.
किञ्चिज्ज्ञानतमोव्याप्तचेतसामथ तन्नृणाम् ।
समियाय प्रकाशाय बालचन्द्रोऽपि चन्द्रवत् ॥१७६॥
उत्तार्य शकटात्सूत्रधारैर्लध्वीमकारयत् ।
बालचन्द्रोऽथ फलहीं शैलाध्यारोहणोचिताम् ॥१७७॥
अथासौ चतुरशीतिं स्कन्धवाहनपौ(पू)रुषान् ।
अमीलयदौहितार्थदानसम्प्रीणितात्मन· ॥१७८॥
तैर्निर्बद्धा यथायुक्त्या काष्ठरज्ज्वादिभिर्नरैः ।
फलही स्कन्धवाहानामंसेष्वेषा न्यवेश्यत ॥१७९॥
तमारोहयितुं तेऽपि चेलुः शैलोपरि द्रुतम् ।
ऊर्ध्वं प्रापयितुं साधो साक्षात्कीर्तिमिवोज्ज्वलाम् ॥१८०॥

भोजनावसरे यत्र ते तिष्ठन्ति बुभुक्षिता ।
ददुस्तदा साधुनरास्तेषां भोजनमीहितम् ॥१८१॥
तथा यत्राययौ रात्रिस्तत्र साधुनरैः कृतम् ।
बभूव भोजनं तेषां शयनं च तदन्तिके ॥१८२॥
एवं प्रयान्ती फलही पूज्यमाना पदे पदे ।
आरुरोह गिरौ षड्भिर्वासरैरतिशायिनी ॥१८३॥
षड्मासैर्यदुपरि जावडि प्रथमं जिनम् ।
रथपृष्ठस्थितस्वाङ्गस्वप्रियाङ्ग पुराऽनयत् ॥१८४॥
तत्रेयं फलही साधोः षड्भिरेव हि वासरैः ।
जगाम देवप्रासादमाससाद सपद्यपि ॥१८५॥
श्रीदेवमन्दिरे द्वारतोरणस्य पुरःस्थिताम् । [बिम्बस्य
फलहीं घटयामासुस्तां वैज्ञानिकपुङ्गवा ॥१८६॥ घटनम्।
घट्यमानस्य बिम्बस्य टङ्काघातभवो रवः
पापद्वीपस्य त्रासाय मृगारातेरिवाभवत् ॥१८७॥
टङ्काघातैः फलहीतो विच्युता विशदा कणाः ।
प्रसस्रुः पुण्यदुग्धोत्था इव किं फेनाबिन्दवः ॥१८८॥
टंकाघाताद्भवा शुक्ला उच्छलन्ति स्म रेणवः ।
देसलश्लोककर्पूरक्षोदा इव चतुर्दिशम् ॥१८९॥
बालचन्द्रोऽपि हि मुनिः सर्वविद्याविशारदः ।
तेषां शिक्षां ददावेकान्तराशनरतः सदा ॥१९०॥
बिम्बं सुघटितं घृष्टं तथोत्तेजितचित्रितम् ।
बालचन्द्रो मुनि(नि)मुख्यस्थाने शीघ्रमनाययत्॥१९१॥
तदा खलाः केऽपि कलेः प्रभावादसहिष्णवः ।
धर्मकार्येऽपि मात्सर्यं दधुरेते यदीदृशाः ॥१९२॥
कलिः खल इवानार्यभरितो वर्ततेऽधुना ।
असतोऽपि यतो दोषानारोपयति[यत्] सताम् ॥१९३॥

तत् केऽपि सन्तस्तद्वासससंसर्गात् तत्स्वभावताम् ।
प्रपद्यन्ते किमाम्रो न कटुः स्यान्निम्बसंगतः ॥१९४॥
परं पुण्यानुभावेन देशलस्य शुभात्मन' ।
बुद्धया साहणपालस्य सत्त्वेन समरस्य च ॥ १९५ ॥
स्वयमेव समागत्य तेऽपि प्रमुदमेदुरा ।
साधो(:)विमुच्य दौर्जन्यं जज्ञिरे कार्यकारक'(काः) ॥१९६॥
बालचन्द्रमुनिबिम्बं मूलस्थाने निवेश्य तम् ।
श्रीपत्तने देशलस्य साधोः शुद्धिमकारयत् ॥१९७॥
तदा मुदा देसलोऽपि व्याजहार स्मरं सुतम् ।
बिम्बे निविष्टे स्वस्थाने वच्छ(त्स)।सिद्धं समीहितम्।१९८
चतुर्विधसंघयुतां यात्रां गत्वा वयं यदि ।
प्रतिष्ठां कारयामस्तत्कृतकृत्या भवेमहि ॥१९९॥
ततो द्वावपि तौ तात-पुत्रौ पौषधवेश्मनि ।
गुरुश्रीसिद्धसूरीणां वन्दनार्थमुपागतौ ॥२००॥
प्रणम्य प्राहतु साधू अस्मदाशातरुः पुरा ।
पूज्योपदेशपाथोभिः सिक्तो योऽङ्कुरितोऽभवत् ॥२०१॥
सिच्यमानोऽनिशं सोऽस्ति तैरेव वरवारिभिः ।
फलोन्मुखोऽधुना बिम्बमूलस्थानोपवेशनात् ॥२०२॥
तस्य प्रतिष्ठाकरणप्रसादवरदोहदान् ।
सफलीक्रिय(कुरु)तामेष सद्य' सम्प्रति सुप्रभो ! ॥२०३॥
तथैवछेधकान्मुख्यप्रासादशिखरोद्धृतिः । तीर्थोद्धारः
परिपूर्णा कारिताऽस्ति भगवन् ! कलशावधिः ॥२०४॥
तथाऽत्राष्टापदाकारं चतुर्विंशतिनाथयुक् ।
देवदक्षिणबाहुस्थं नवं चैत्यं च कारितम् ॥ २०५ ॥
बलानकमण्डपस्य सिंहास्त्रिभुवनाग्रत ।
उद्धारं कारयामास पूर्वजोद्धारहेतवे ॥२०६॥

तथा विहरमाणानामर्हतां साम्प्रतं भुवि ।
अकारयन्नवं चैत्यं स साधुर्जिनपृष्ठतः ॥२०७॥
अङ्गजः स्थिरदेवस्य लंढुकः साधुसत्तम ।
चकार देवकुलिकाचतुष्टयमदुष्टधीः ॥ २०८ ॥
जैत्रकृष्णाभिधौ संघपती त्वष्टौ च चक्रतुः ।
प्रधाना देवकुलिका जिनबिम्बसमन्विताः ॥२०९॥
साधोः पृथ्वीभटस्यैव कीर्तिस्तंभो बभूव यत् ।
सिद्धकोटाकोटिचैत्यं तुरुष्कैः पातितं हि तत् ॥२१०॥
श्रीहरिश्चन्द्रतनय साधुराट् केशवाह्वयः ।
तमुद्दधार भाग्यस्याधारः सारगुणाश्रयः ॥२११॥ युग्मम्
तथाऽन्यदेवकुलिकालेपमुख्यमभूत् च्युतम् ।
तत्सर्वं कोऽपि किमपि कारयामास पुण्यवान् ॥२१२॥
तीर्थे सर्वस्थानकानि जज्ञिरे पूर्ववत्तथा ।
भंगं कस्यन (कश्चन) तीर्थस्य न विवेद यथा क्वचित् ॥१(२)१३॥
तत्प्रभो ! कलशस्यापि दण्डस्यापि तथाऽर्हताम् ।
परेषामपि सर्वेषां प्रतिष्ठा कार्यतेऽधुना ॥२१४॥
गुरवः प्रोचिरे साधो ! प्रतिष्ठालग्नमुत्तमम् ।
यदा स्यात् तेन सा कार्या प्रतिष्ठा स्याद् यथा स्थिरा ॥२१५॥
ततः सूरीन् गुणभूरीन् द्विजान् ज्योतिर्विदोऽपि हि ।
स[म]मीलयत लग्नस्य यथाशुद्धिर्विलोक्यते ॥२१६॥
अथ भव्यदिने भव्यमुहूर्ते साधुदेसलः ।
आजूहवत् सूरिवर्यान् मुख्यान् ज्योतिर्विदोऽपि च ॥२१७॥
निवेश्य स वाँनावासे तथा श्रावकपुङ्गवान् ।
आकार्योच्चैरासनेषु न्यवेशयदनाकुलः ॥२१८॥
देसलः प्राञ्जलिरथो सूरिज्योंतिर्विदांवरः ।
स्थित्वा प्रोचे शुभं किञ्चिल्लग्नमन्वेष्यतां प्रभो ! ॥२१९॥

तेऽपि शास्त्रविदः सर्वे मिथोऽनूच मुहुर्मुहुः ।
लग्नं प्रकाशयामासुर्निर्णीय गतदूषणम् ॥२२०॥
सर्वेषां सम्मते जाते देशलो लग्नपत्रिकाम् ।
ज्योतिर्विदाऽथ मुख्येन लेखयामास सत्वरम् ॥२२१॥
घुसृणत्र(छ)टकस्विन्ना विरेजे लग्नपत्रिका ।
साधोर्धर्मानुरागाब्धिवीचिशीकरसङ्गिनो ॥ २२२ ॥
ददे ज्योतिर्विदा साधुशये सा लग्नपत्रिका ।
कल्याणनिधिलाभार्थमिव शासनभूर्जिका ॥२२३॥
समरसाधुरथाचार्यपादौ चन्दनपुण्ड्रकैः ।
शिरः कर्पूरपूरेण पूजयित्वाऽभ्यवन्दित ॥२२४॥
ज्योतिर्विदां ललाटेषु कालेयतिलकान्यथ ।
कृत्वा ताम्बूल-वासोभिर्द्रविणेनाप्यमानयत् ॥२२५॥
श्रीखण्डतिलकैः श्राद्धान् विभूष्य कुसुमादिभिः ।
स सकर्पूर-ताम्बूलैरसमानैरतोषयत् ॥२२६॥
गीतानि गायना गायन्ति स्म वैतालिका अपि ।
साधोर्यशः स्तुतिं पेठुरेवं प्रववृते मह ॥२२७॥
एवं लग्नोत्सवं कृत्वा प्रीणयित्वाऽथ मार्गणान् ।
वि(व्य)सृजद् देसलः संघं बहुमानपुरस्सरम् ॥२२८॥
अथ प्रतिष्ठासमये प्रत्यासत्तिमुपेयुषि ।
देशलः सर्वदेशेषु सघाह्वाननहेतवे ॥२२९॥
कुत्रापि गोत्रिणः क्वापि पौत्रान् कुत्रापि मन्त्रिण ।
क्वाप्यन्यान् प्रेषयामास स्वविज्ञप्तिकरान् नरान् ॥२३०॥
स्वयं देवालयं नव्यं प्रत्यक्षरथसंनिभम् ।
यात्रायोग्यं सुचित्राद्यं(ढ्य)कारयामास देसलः॥२३१॥युग्मम्
गुरुश्रीसिद्धसूरीणां पौषधांकसि देसलः ।
नीत्वा देवालयं तेभ्यो व्यासक्षेपं व्यधापयत् ॥२३२॥

अथ सर्वोत्तमदिने शुभे वारे शुभे च भे ।
देवालयस्य प्रस्थानं देसल स व्यचिन्तयत् ॥२३३॥
उपस्थिते दिने तस्मिन् प्रस्थानं स सिसाधिषुः ।
साधुः पौषधशालायां सर्वं संघममीलयत् ॥२३४॥
संघः स्वयमुत्सुकोऽभूत् तदाहूतोऽमिलद् द्रुतम् ।
उन्मन्नमथा यतो बालाऽन्यच्च कोकिरवोऽजनि ॥२३५॥
अथ तालाज्ञया सूरीनुपाध्यायांस्तपोधनान् ।
शुभासनेषु समरः आनुपूर्व्या न्यवेशयत् ॥२३६॥
महत्तरा प्रवर्तिन्यः साध्व्योऽन्या अपि सन्ति याः
समेतास्ता अपि यथायुक्त्योपावेशयत्समरः ॥२३७॥
समरस्य बहुमानेन भक्त्या संतुष्टमानसाः ।
उपासकाः श्राविकाश्च स्वस्थाने उपाविशन् ॥२३८॥
साधुर्धराधृतजानुः सिद्धसूरिगुरोः पुरः ।
देसलो वासनिक्षेपकारणार्थमुपाविशत् ॥२३९॥
तस्यालीके स तिलकं शुभहेतुर्गुरुर्व्यधात् ।
अधोक्षजाग्रजस्यैव सुरसूरिर्जयार्थिनः ॥२४०॥
शिरस्यारोपयद्वासचूर्णमस्य गुरोः (रुः) स्वयम्
जगल्लक्ष्मीवशीकारे तदेवाजनि कार्मणम् ॥२४१॥
ततः समरशीर्षेऽपि वासान्निक्षिप्य सद्गुरुः ।
मुख्यः संघपतीनां त्वं भूयादित्याशिषं ददौ ॥२४२॥
अथो गुरूक्तवेलायां गृहदेवालयस्थिताम् ।
प्रतिमामादिनाथस्य समादाय मुदाऽन्वितः ॥२४३॥
पञ्चशब्दनिनादेसौ (दैः स) पूरयत्यभितो दिशः । (संघस्य
देशलोऽस्थापयद्देवालये मङ्गलपूर्वकम् ॥ २४४ ॥ प्रयाणः)
तदाऽभूत्पोषमासस्य सितपक्षस्य सप्तमी ।
यत्र देवालये देवस्थापना जङ्गमाऽजानि ॥२४५॥ युग्मम् ।

मासः पूर्वमकर्मा योऽभवत्कार्येषु वर्जितः ।
साधूनां धर्मपोषाद्धि पौषाख्योऽभूच्छुभाश्रयः ॥२४६॥
यक्षः कपर्दी श्रीसत्यदेवी श्रीशासनामरी ।
तदानीं समरस्याशु शरीरे समवासरत् ॥२४७॥
शृङ्गकौशुम्भवस्त्राढ्यौ लिप्तौ कुङ्कुमहस्तकैः ।
विक्कणत्किङ्किणीक्काणदत्तश्रुतिसुखासिकौ ॥ २४८ ॥
समशृंगौ समखुरौ समदेहौ समच्छवी ।
देवालये सौरभेयौ धौरेयौ नियोजितौ ॥२४९॥ (युग्मम्)
धवलानां धुरीणानां जगतः स्थितिकारिणाम् ।
वृषाणामुचितमेव यद्देवालयसंश्रयः ॥ २५० ॥
देवालयरथे हस्तकृतरश्मिः समारुहत् ।
सामन्तो मातलिरिव यात्रायां वज्रिणो रथे ॥२५१॥
तदा सुवासिनी काऽपि स्थालं सम्पूर्णमक्षतैः ।
पुरः स्फुरन्नालिकेरं समादाय समाययौ ॥२५२॥
साधोर्मूर्ध्नि देसलस्य समरस्य च हर्षतः ।
अक्षतानक्षयनिधीनिव निक्षिपति स्म सा ॥२५३॥
नालिकेरं करे दत्त्वा श्रीखण्डतिलकादनु ।
पुष्पमालां गले न्यस्य ददावाशीर्वचोऽपि हि ॥२५४॥
सामन्तोऽथ पुरो वर्यतूर्यत्रयरवैर्मुदम् ।
जगतोऽप्युज्जागरयन् देवालयमचालयत् ॥२५५॥
श्रीकर्री(रो)वृषभो रश्मिबद्धः पर्याणितो हयः ।
पुरोनिर्नयने तानि बभूवुः शकुनान्यथ ॥२५६॥
इत्यादिकान्यनेकानि शकुनानि निरीक्ष्य सः
साधुः सिद्धिं स्वकार्याणां मेने हस्तगतामिव ॥२५७॥
पुरोगैः सूरिभिः सारैरनेकैश्च मुनीश्वरैः ।
मरुत्पथ इवापूर्वस्तदा देवालयोऽचलत् ॥२५८॥

उपासका अपि नृपा इव रत्नविभूषणैः।
विभूषिता हयारूढा देवालयपुरोऽचलन् ॥२५९॥
तदा नान्द्या प्रसर्पन्त्या समाहूता इवाभितः।
तथाऽमिलन् यथा रथ्यास्वगुरुर्व(र्वी)भुजा जना ॥२६१॥
त(य)स्यापतत्पटी पुंसः स तामामदातुमक्षमः।
आदत्तान्यस्य मौलिस्थां निपतन्तीं पटीं मुदा ॥२६१॥
मिथो निबिडसम्पर्कात् पद्भ्यां गन्तुमशक्नुवन्।
पकैकोत्पाटित इव ययौ लोकस्तदा पथि ॥२६२॥
संघक्रमसमुद्भूता व्यानशे धूलिरम्बरम्।
तत्पदाराधनात् कस्य न स्यादुच्चैःपदस्थितिः ॥२६२॥
सुखासनसमारूढो देवालयपुरश्चलन्।
संघनायकतां भेजे देसलः संघसंवृतः ॥२६३॥
समरोऽप्यश्ववारैश्च वारवृन्दवृतः पुरः।
अचालीदद्भुतश्रीको वज्रीवोच्चैःश्रवस्थितः ॥२६५॥
प्रसृतोऽग्रमहोभेरीभांकारैः काहलारवैः।
कलिकालो भयत्रस्त इवानाये(र्ये)षु जग्मिवान् ॥२६६॥
गम्भीरध्वनिभिस्तूर्यैर्ध्वनद्भिर्गणनातिगैः।
जनो मेने कृतयुगप्रवेशस्य महोत्सवम् ॥२६७॥
अनार्या अपि पश्यन्तो वर्णयन्तस्तमुत्सवम्।
अभद्रभावा भद्रत्वं प्रापुर्धर्मप्रशंसनात् ॥२६८॥
लोककोलाहलोड्डीनाः पक्षिणोऽपि विहायसि।
पश्यन्ति स्म समारुह्य सुप्रस्थानमहोत्सवम् ॥२७०॥
नान्दीश्रवादुच्छ्वसस्तिर्यञ्चोऽपि तमुत्सवम्।
नृत्यन्ति स्म विलमतः (वल्गन्तः) पश्यन्तो मुदिता इव॥२७०॥
पदे पदे वन्द्यमानः पूज्यमानो गृहे गृहे।
ययौ देवालयः शंखारिकायां प्रथमे दिने ॥२७१॥

तत्र देवालयस्तस्थौ संघनाथोऽपि देसलः ।
समरोऽपि सह संघेन पुनः पत्तनमागमत् ॥२७२॥
गत्वा पौषधशालासु संघेन सहितः समरः ।
यात्रायै सर्वसूरीणां स क्षमाश्रमणं ददौ ॥२३७॥
सर्वानभ्यर्थयामास श्रावकान् सादरः समरः ।
गत्वा प्रतिगृहं संघान्वितः साधुः सगौरवम् ॥२७४॥
सगौरवं समाहूताः केऽपि केऽप्युत्सवोत्सुकाः ।
केऽपि यात्रारसोत्पन्नप्रमोदाङ्कुरधारिणः ॥२७५॥
विधाय सर्वसामग्रीं स्वस्थानेभ्य उपासकाः ।
समरस्य गुणाकृष्टा इव शीघ्रमुपाययुः ॥२७६॥
अगाधसर्वसिद्धान्तमहोदधितरीसमाः । [ संवे आचार्या
श्रीमद्विनयचन्द्राह्वा यात्रायै सूरयोऽचलन् ॥२७७॥ मुनयश्च ]
बृहद्गच्छवियच्चन्द्राश्चारुचारित्रधारिणः ।
अचलन् सह संघेन श्रीरत्नाकरसूरयः ॥२७८॥
श्रीदेवसूरिगच्छीयाः सर्वत्र गरिमाशयाः ।
श्रीपद्मचन्द्रनामानः सूरयोऽपि सहाचलन् ॥ २७९ ॥
श्रीखण्डेरकगच्छीयाः श्रीमत्सुमतिसूरयः ।
जिनालोकोल्लसद्वाञ्छाश्चेलुः चञ्चलतोज्झिताः ॥२८०॥
भावडारकगच्छश्रीवदनस्य विशेषकाः ।
श्रीवीरसूरयश्चेलुर्यात्रायां मुदिताशयाः ॥२८१॥
श्रीस्थारपद्रगच्छीयाः श्रीसर्वदेवसूरयः ।
चेलुर्ब्रह्माणगच्छीयाः श्रीमज्जगतसूरयः ॥२८२॥
श्रीसान्निवृत्तिगच्छीया आम्रदेवाख्यसूरयः ।
चेलुर्यैर्देसलस्यास्ति यात्राया रासकः कृतः ॥२८३॥
श्रीनाणकगणव्योमाङ्गणभूषणभास्कराः ।
सिद्धसेनाह्वयाचार्या देसलेन सहाचलन् ॥२८४॥

सूरयो धर्मघोषाख्या बृहद्गणसमुद्भवाः ।
चलन्ति स्मोच्छलद्रङ्गसङ्गाभङ्गुरचेतसः ॥२८५॥
श्रीमन्नागेन्द्रगच्छीयाः श्रीराजगुरवोऽपरम् ।
नामादधानाः संचेलुः श्रीप्रभानन्दसूरयः ॥२८६॥
श्रीहेमसूरिसन्तानपावनाः शुद्धभावनाः ।
श्रीवज्रसेननामानः सूरयः समुपागताः ॥२८७॥
अन्येऽपि सूरयो नानागच्छसागरकौस्तुभाः ।
आशिश्रियुः संघनाथं देसलं पुरुषोत्तमम् ॥२८८॥
श्रीचित्रकूट–वालाक–मरु--मालवकादिषु ।
पदस्था मुनयो ये स्युः प्रायः सर्वेऽपि तेऽमीलन् ॥२८९॥
शुभे वारे शुभे लग्ने श्रीमन्तः सिद्धसूरयः ।
सर्वदर्शनसंयुक्ताश्चेलुर्देसलसंनिधौ ॥२९०॥
तेषां श्रीसिद्धसूरीणां सर्वदर्शनशालिनाम् ।
प्रवेशोत्सवमातेने संघे संघेशदेसलः ॥२९१॥
जैत्र--कृष्णाह्वयौ संघपती धर्मधुरन्धरौ ।
चेलतुर्देसलस्नेहगुणाबद्धौ सहोदरौ ॥ २९२ ॥
विधातुं गुणसंयोगं मुक्तानामपि वेत्ति यः ।
स समेत्यामिलत्संघे हरिपालोऽपि वत्कुरः ॥२९३॥
देवपालः संघपतिः संघमादाय सत्वरम् ।
देसलस्यागमत् संघे श्रीत्यागभटवाटकान् ॥२९४॥
श्रीवत्सकुलकल्पद्रुः स्थिरदेवस्य नन्दनः ।
संघे य (यि) यासुर्यात्रायां लेढुकोऽप्यमिलन्मुदा ॥२९५॥
प्रह्लादनोऽपि संचेले सौवर्णिकशिरोमणिः ।
संघे समरसन्मानसंवर्द्धितसमुद्यमः ॥२९६॥
सत्यवाग्व्रततीव्रातसमुल्लासनवारिदः ।
गत्वाऽमिलदथो संघं सोढाकः श्रावकोत्तमः ॥२९७॥

दधानो धर्मवीरत्वं वीराभिख्य उपासकः ।
चचालाचलभावेन सह संघौघवारिणि ॥ २९८ ॥

संघेऽत्र देवराजोऽपि देवराज इवाबभौ ।
चक्रे प्रदाय दीनेभ्यो यो मर्त्येभ्योऽतिशंबलम् ॥२९९॥
ये केऽप्युपासकाः प्रायो गूर्जरोर्व्यां तदाऽभवन् ।
तेषु पश्चान्न कोऽप्यस्थात् समरस्यानुरागतः ॥३००॥

एवं सकलदेशेभ्यः संघेषु मिलितेष्वथ ।
संघस्य कारयामास प्रयाणं देशलोऽग्रतः ॥ ३०१ ॥
जैत्र-कृष्णौ लंढकश्च हरिपालोऽपि मण्डपे ।
स्तम्भा इवामी चत्वारोऽभूवन् संघमहा(ही)धराः ॥३०२॥

श्रीमन्तमलपखानमनुज्ञापयितुं समरः ।
महोपायनमादाय जगाम नृपमन्दिरम् ॥३०३॥
अढौकयद् ढौकनानि श्रीखानस्य पुरः समरः ।
सन्तुष्टः सोऽप्यदात् तस्मै तसरीफां हयान्विताम् ॥३०४॥
स्मरोऽथ स्वामिनः पार्श्वे ययाचे यमदारकान् ।
ये दुष्टनिग्रहायालंभूष्णवः सत्यनामकाः ॥३०५॥
खानेनापि महासीरा वीरा धीरा दशामुना ।
वितीर्णाः संघरक्षार्थं प्रधाना यमदारकाः ॥ ३०६ ॥
तानादाय समरः साधुः संघं च पृष्ठतः स्थितम् ।
देसलस्यामिलत्संघे सोऽनघे संघनायकः ॥ ३०७ ॥

देवालयस्य पुण्यस्य मार्गदर्शी च देशलः ।
सुखासनादिरूढः सन् सुखेन पुरतोऽगमत् ॥३०८॥
साधोः सहजपालस्य सुतः संघस्य पृष्ठतः
सोमसिंहो निर्विकारश्चकार परिरक्षणम् ॥३०९॥
स्मरः करस्फुरच्चक्रो भोजनाच्छादनैर्वरैः ।
चक्रे भरतचक्रीव श्रावकाणामनूनताम् ॥३१०॥

ससिल्लारैरश्ववारैः परितः परिवेष्टितः ।
पुरोधनुर्द्धरवरश्रेणिछो(छा)दितभूतलः ॥३११॥
समरोऽपि लसन्मौलिर्मयूरातपवारणः ।
किल कल्पद्रुमेणेवच्छन्नः साक्षादुपेयुषा ॥ ३१२ ॥
अश्वरत्नं समारूढो निजभाग्यमेवोन्नतम् ।
अग्रतः पृष्ठतो रक्षां संघस्य विदधे स्वयम्॥ त्रिभिर्विशेषकम्॥
संघस्य चलतः शंखनिनादः प्रसरन् दिशः ।
अपूरयत् तथा विष्णोः पाञ्चजन्यरवो यथा ॥३१४॥
तथा निस्वानः भेरीणां काहलानां रवोऽभवत् ।
प्रमादनिद्राशयितान् भविनो बोधयन्निव ॥३१५॥
संचचारानसां श्रेणिः सस्पर्द्धं त्वरितैर्वृषैः ।
सपर्याणगजेन्द्राणामिव संघनरेशितुः ॥३१६॥
हयहेषारवैश्चक्रचीत्कारैर्जनशब्दितैः ।
शब्दो मद्गुण इत्यासीद् व्याप्तं गर्जेदिवाम्बरम् ॥३१७॥
गृहीताभिग्रहान् पादचारिणो वीक्ष्य धार्मिकान् ।
रेणुव्याजात् तत्पदयोः पाविञ्यायालगद् धरा ॥३१८॥
निरन्तरं संचचार संघलोकस्तथा यथा ।
निम्नोन्नतसमीकारात्समैवाभवदुर्वरा ॥३१९॥
तथा पथ्यचलत् संघो यथा लोकः परस्परम् ।
पृथग्भूतो न मिलति स्थानप्राप्तौ न यावता ॥३२०॥
महत्यापि सरस्याद्यो जनः स्वच्छं जलं पपौ ।
मध्यमः कलुषं पश्चादागतः कर्दमं पथि ॥३२१॥
प्रतिग्रामं ग्रामनाथा संघेशं स्मरमागतम् ।
विलोक्य दधिदुग्धादिप्राभृतान्युपनिन्यिरे ॥ ३२२ ॥
ग्रामे ग्रामे धार्मिकाणां संघैः सस्पर्द्धमागतैः ।
अर्च्यते स्म पदद्वन्द्वं देसलस्य मुदन्वितैः ॥३२३॥

वाहिनीस्थस्तथा कोऽपि स्पर्द्धया त्वरयन् वृषान् ।
यथा पतन्तं पार्श्वस्थं स्वामिनं नाप्यजीगणत् ॥३२४॥
विवादे सति सूतानां स्वस्वाग्रतयाऽनसाम् ।
प्रस्खल्य कीलकेल (भ)ग्ने तस्य (स्या) हस्यत पार्श्वगैः ॥३२५॥
प्रज्वलद्दीपिकाहस्तैरनःपार्श्वचरैर्नरैः ।
संघे चलति शर्वर्यां दीपोत्सव इवाभवत् ॥३२६॥
यत्र देवालये लोकाः प्रत्यहं प्रेक्षणक्षणे ।
पश्यन्तोऽनिमिषान्नृत्यं देवा इव विरेजिरे ॥३२७॥
सदैवावारितं सत्रं कारयामास देसलः ।
समेत्य क्षुधितो भुङ्क्तामित्युच्चैःस्वरपूर्वकम् ॥३२८॥
संघप्रयाणकेष्वेवं दीयमानेष्वहर्निशम् ।
श्रीसेरीसाह्वयस्थानं प्राप देसलसंघपः ॥३२९॥ [ सेरीसा ]
श्रीवामेयजिनस्तस्मिन्नूर्ध्वप्रतिमया स्थितः ।
धरणेन्द्राशसंस्थ्यहिः (?) सकले यः कलावपि ॥३३०॥
यः पुरा सूत्रधारेण पटाच्छादितचक्षुषा ।
एकस्यामेव शर्वर्यां देवादेशादघटयत ॥३३१॥
श्रीनागेन्द्रगणाधीशैः श्रीमद्देवेन्द्रसूरिभिः ।
प्रतिष्ठितो मन्त्रशक्तिसम्पन्नसकलेहितैः ॥३३२॥
तैरेव सम्मेतगिरेर्विंशतिस्तीर्थनायकाः ।
आनिन्यिरे मन्त्रशक्त्या त्रयः कान्तीपुरीस्थिताः ॥३३३॥
तदादीदं स्थापितं सत्तीर्थं देवेन्द्रसूरिभिः ।
देवप्रभावाद् विभावि सम्पन्नजनवाञ्छितम् ॥ ३३४ ॥
तत्र स्नात्र–महापूजा–महामह–महाध्वजाः ।
विधाय देसलः साधुरारात्रिकमथाकरोत् ॥ ३३५ ॥
ददाववारिते सत्राकारे भोज्यं यथेप्सितम् ।
स्वर्णकङ्कणवस्त्राद्यं(ढ्यं) स्मरो गायनवन्दिनाम् ॥३३६॥

अष्टाह्निकान्ते संघस्य कारयित्वा प्रयाणकम् ।
श्रीक्षेत्रपुरं प्राप देसलः संघसंयुत. ॥३३७॥ [ क्षेत्रपुरं ]
तत्राप्यर्हतां प्रतिमां सम्पूज्यातिभक्तित ।
धवलक्कपुरेऽगच्छदतुच्छमहिमाश्रय ॥३३८॥ [ धवलक्कपुरं ]
प्रतिचैत्यं चैत्यपरिपाटीं ग्राम–पुरादिषु ।
कुर्वन् महाध्वजा–पूजादिभिः पुण्यमुपार्जयत् ॥ ३३९ ॥
क्रमेण देसलः संघपति स्व[ ]पतिवैभवः ।
पिप्पलालीनाम पुरं प्राप पापविवर्जित ॥३४०॥[पिप्पलाली]
पुण्डरीकगिरिं तत्र पुण्यसत्रमिवाङ्गिनाम् ।
विलोक्य देसल सद्यः सुधामग्न इवाभवत् ॥ ३४१ ॥
चतुर्विधेन सघेन सहितः साधुदेसल ।
समरेण पुर स्थेन जयन्तेनेव वासवः ॥ ३४२ ॥
साध्यमानमहाकार्यो विधाप्य लपनश्रियम् ।
गिरीशं पूजयामास महोत्सवपुरस्सरम् ॥३४३॥ युग्मम् ।
एकदृष्ट्या पुण्डरीकं वीक्ष्य(क्ष)माणे(णो)थ देसलः ।
नेत्ररश्मिभिराबद्ध्य तमाक्रष्टुमिवार्थ(पे)यत् ॥ ३४४ ॥
तद्दर्शनानन्दपरवशो देसलः संघपः
समरोऽपि महादानान्यदादगणितार्थिषु ॥ ३४५ ॥
द्वितीयदिवसे तीर्थनाथस्योत्कण्ठया रयात् ।
कृत्वा प्रयाणं श्रीशत्रुञ्जयशैलतले ययौ ॥ ३४६ ॥
सरसो ललितादेवीकारितस्य तटे स्मरः ।
संघस्य कारयामासावासानासन्नपर्वतान् ॥ ३४७ ॥
चतुर्महाधराधरा:(र:) पतितो राजवंशभृत् ।
देवालयपुरो रेजे राजेव चतुरो वर (?) ॥ ३४८ ॥
भूरयो राजगिरयो विलसद्धंशमालिका ।
संघपतेर्देसलस्य निवासाय तदाऽभवन् ॥ ३४९ ॥

निष्पन्नो वंशकम्बाभिर्दुर्गस्तत्परितोऽभवत् ।
सज्जीकृतः समरेण पापवैरिनिवारणः ॥ ३५० ॥
तेजस्विनो महावेगाः सजात्या यस्य वाजिनः ।
अध्यक्षा इव रेवन्ता मंदुरासु विरेजिरे ॥ ३५१ ॥
संघे सर्वत्र दृश्यन्ते पटकुट्यः समुज्ज्वलाः ।
आवासा भोगिलोकानां पातालादिव निःसृताः ॥३५२॥
देसलो यावदारोहं न व्यधाद् विमलाचले ।
तावद्वर्धापकनरः स्तम्भतीर्थाद् समाययौ ॥ ३५३ ॥
यद्देवगिरे सहजपालः श्रीस्तम्भतीर्थतः ।
साहणः संघसहितौ द्वावेतावित्युवाच सः ॥ ३५४ ॥
सङ्घानुराग-सौभ्रात्रप्रीत्या भ्रात्रोरथ समरः ।
प्राप्य स्वर्णं सुगन्धीव तच्छ्रुत्वा मुमुदेतराम् ॥ ३५५ ॥
अथ संघयुतः संघनायकः समरस्तयोः ।
ययावभिमुखं मुख्यः सतामुत्कण्ठिताशयः ॥ ३५६ ॥
अपारैरश्ववारैश्च सरथैः सपदातिभिः ।
धनुर्धरैर्वेगवरैर्धूनयन् धरणीतलम् ॥ ३५७ ॥
पूरयन्नुर्वरां लोकैः ककुभः काहलारवैः
ययौ योजनमेकं द्राक् स्नेहसान्द्रीभवन्मनाः ॥३५८॥
जगन्मान्यो सदुल्लासकारणं नन्दनः श्रियः ।
समरः स्वबन्धवोरमिलत् मधुमाधवयोरिव ॥३५९॥ युग्मम्
भ्रातरौ गाढमालिङ्ग्य समरः प्रणनाम तौ ।
तादृक् महत्त्वं भक्तिं च वीक्ष्य लोकोऽस्य विस्मितः ॥
तावपि श्रीसमरसिंहं गाढमालिङ्ग्य मोदतः ।
भ्रातश्चिरं वरं संघाधिपतिं पालयोचतुः ॥ ३६१ ॥
संघे ये स्तम्भतीर्थस्य सूरयो भूरयोऽभवन् ।
अवन्दत पदस्तेषां समरो भक्तिवामनः ॥ ३६२ ॥

पाताकसचिवभ्राता मन्त्रीशः साङ्गणाह्वयः । [श्राद्धाः]
श्रीस्तम्भतीर्थनगरात् ताभ्यां सह समाययौ ॥ ३६३ ॥

निजवंशक्रमायान्तं संघेशत्वमवाप यः ।
सैष लालाभिधः संघपतिः संघविभूषणः ॥ ३६४ ॥
भावसारतया येन वीतरागोऽपि तोषितः ।
स सिंहभटनामापि समेत श्रावकोत्तमः ॥ ३६५ ॥

श्रीवस्तुपालसचिवान्वयमङ्गलदीपकः ।
मन्त्रीशो वीजलाभिख्यो हर्षात् संघे समागतः ॥३६६॥
तथा मदन–मोल्हाक–रत्नसिंहादयोऽपरे ।
प्रतिष्ठोत्कण्ठिता· श्राद्धा असंख्याता समागताः ॥३६७॥

सर्वान् संभावयामास यथायोग्यमुपासकान् ।
साधुः समरः किमौचित्यात् प्रस्खलन्ति महाधियः ।३६८।
संमान्य निखिलं संघं समरसाधुः सबान्धवः ।
समाययावुत्पताके संघे महपुरस्सरम ॥ ३६९ ॥
देसलस्य पितुः पादौ तावुभावपि वान्धवौ ।
अवन्दतां भक्तियुक्तौ श्रीरामलक्ष्मणाविव ॥ ३७० ॥
देसलोऽपि सुतस्नेहामृतसिक्तवपुर्लतः ।
यतोऽभूदिति रोमाञ्चव्याजतोऽङ्कुरावलिः ॥ ३७१ ॥

अथ सुतयुगलस्याभ्यागमामन्दनन्द–
प्रमदगलितचेता देसलः संघनाथः ।
विहितसकलकृत्योऽर्हत्प्रतिष्ठाविधाने
विमलगिरिशिरस्यारोहणायोद्यतोऽभूत् ॥ ३७२ ॥

इति श्रीशत्रुंजयोद्धारे देवालयप्रस्थान–संघचलनो नाम
चतुर्थः प्रस्ताव ॥

# अथ पञ्चमः प्रस्तावः ।

अथ प्रभाते पुरपादलिप्त-
निवासिनं पार्श्वजिनं प्रणम्य ।
वीरं च तीरेससोऽ(तीर्थेश्वरम)र्चयित्वा
शैलस्य मूलं स ययौ ससंघः ॥ १ ॥

श्रीनेमिनाथं परिपूज्य तत्र
श्रीदेसलः संघपतिः सपुत्रः ।
समुन्नतं पर्वतमारुरुक्षुः
शिवस्य सोपानममुं स मेने ॥ २ ॥

श्रीसिद्धसूरिप्रभुदत्तहस्त-
स्वहस्तसंयोजनतः स साधुः ।
द्विधाप्यधःपाततयेव मुक्त-
स्तस्मिन्नसावारभताधिरोढुम् ॥ ३ ॥

यस्मिन्नशोकार्जुन-देवदारु-
रसाल-सालादिमहातरूणाम् ।
छायासु विश्रम्य भवस्य देह-
स्यापि श्रमं भव्यजना नुदन्ति ॥ ४ ॥

यस्मिन् मयूरस्य रवं निशम्य
ग्रीवां निवृत्याथ विलोक्य नृत्यम् ।
तच्छिक्षणायाशु जना जिनाग्रे ।
कर्तुं तमध्यापकमामनन्ति ॥ ५ ॥

यस्मिंश्च हारीत-चकोर-चाष-
शिखण्डि-कारंडव-सारसानाम् ।

रवैः सुगीतैरिव हृष्टचित्ता
वदन्ति खेदं गतिजं न भव्याः ॥ ६ ॥
यत्रोज्झरन्निर्झरवारिपूर-
भवं निशम्य ध्वनितं गभीरम् ।
पयोदनादोऽयमितीव लोका
वस्त्राणि किञ्चित्परिवेष्टयन्ति ॥ ७ ॥

यस्मिन् मिलन्निर्झरशीकरेषु
स्खलन् सपुष्पद्रुमकाननेषु ।
शनैः शनैर्वाननिलः शिखेव (शीतो वा)
तनौ लगन् प्रीणयति स्म लोकम् ॥ ८ ॥

तस्मिन्नसौ भव्यजनोपगीत-
गुणव्रजो रासनकर्तनेषु (?)
सुतत्रयेणोपगतो निनादः
सुरत्रयेणोर्ध्वमिवारुरोह ॥ ९ ॥
तत्राधिरूढः प्रथमप्रवेशे
युगादिभर्तुर्जननीं निरीक्ष्य ।
माता सुतेनैव जनाभिवन्द्या
भवेत्सदा देसल इत्यमंस्त ॥ १० ॥

समुद्द(द्धृ)तां तां स्वयमेव साधुः
संपूज्य पूजाविधिविज्ञचितः ।
श्री शान्तिनाथस्य ययौ स चैत्ये
चक्रे सपर्यां च जिनस्य तस्य ॥ ११ ॥

तथाऽदिनाथादिजिनान् ससघः
श्रीदेसलः संघपतिः प्रपूज्य ।
समुद्धृतायाः स्वयमेव मूर्तेः
कपर्दिनो दर्शनहेतवेऽगात् ॥ १२ ॥

तत्र स्थितः संघपतिः ससंघो
निरीक्ष्य चैत्यं विलसत्पताकम् ।
संसारसिन्धोः परपारयाने
यानं स मेने किल संघमेतत् ॥ १३ ॥
तदेकदृष्ट्यैव विलोकयन् स
क्रमेण सङ्घाधिपदेसलोऽगात् ।
युगादिनाथस्य जिनस्य सिंह-
द्वारं श्रियो द्वारमिवाविशन्त्याः ॥ १४ ॥

अथ स्थितस्तत्र युगादिदेवं
संवीक्ष्य हर्षेण धनं ववर्ष ।
स देसलः स्वर्ण-हिमांशुवासो-
मुक्तामणिनाणकभूषणादि ॥ १५ ॥

मध्ये प्रवे(वि)श्याथ तमादिनाथं
स्वकारितुं (तं) वन्दितुमुक्त(त्क)चित्तः ।
भूमौ लुठन् देसलसंघनाथो
युगादिनाथस्य समीपमागात् ॥ १६ ॥

उत्थाय सर्वाङ्गममुं जिनेशं
साधुः सुधामूर्तिमिवालिलिङ्ग ।
कः प्राप्य दुष्प्रापमशेषविश्व-
संजीवनं माद्यति नो निधानम् ॥ १७ ॥

प्रणम्य भक्त्या जिनमादिनाथं
तं लेप्यमूर्तिं परिपूज्य पुष्पैः ।
प्रदक्षिणां दातुमनाः स कोटा-
कोटिस्थितानार्चयदर्हतोऽथ ॥ १८ ॥

अपूपुजत् पाण्डवपञ्चमूर्तीः
कुन्तीं तथा देसलसंघनाथः ।

गत्वा प्रियालुद्रुतलस्थितां श्री-
युगादिदेवस्य पदद्वयीं च ॥ १९ ॥
स्वकारितां तत्र मयूरमूर्तिं
विलोक्य लोकाद्भुतकारिणीं सः ।
समुल्लसद्धर्षमना ववर्ष
मुक्ता-मणि-स्वर्ण-विभूषणादि ॥ २० ॥
राजादनोऽप्यादिजिनेशतीर्थे
य उद्भूतोऽभूत् स तथास्थ एवम् ।
दृष्ट्वा परां देसलसाधुभक्तिं
दुग्धेन द(वृ)ष्टिं सुधयेव चक्रे ॥ २१ ॥
महोत्सवं साधु विधाय साधु-
र्वितीर्य वस्त्रादिकमर्थिनां सः ।
द्वाविंशतिं तीर्थपतीन् प्रपूज्य
प्रदक्षिणां सर्वगतां चकार ॥ २२ ॥
अथादिनाथं प्रणिपत्य साधु-
र्महीमिलन्मौलिरसौ जगाम ।
स्वमाश्रयं पुत्रयुतः प्रतिष्ठा-
विधापनायाशु समुद्यतोऽभूत् ॥ २३ ॥
साधुः प्रतिष्ठाविधिकारणाय
तनूद्भवं स्वं समरमादिदेश ।
समेषु सूनुष्वपि कार्ययोग्यं
कस्यापि हि स्यादतिशायि भाग्यम् ॥ २४ ॥
आदेशमासाद्य पितुः समरोऽपि
संभावना (नां) सान्(तां)मुनिगौरवस्य (?)
विवेद वेदेषु यदुच्यतेऽदः
कार्ये नियोगो बहुमानहेतुः ॥ २५ ॥

अष्टादश स्नात्रमयूर (मधुर-?) [ प्रतिष्ठा ]
पिण्ड-पक्वान्नयुग् मूलशतादि वस्तु ।
संमीलयामास स कारयित्वा
सर्वं प्रतिष्ठाविधिशायकं (सहायकं यत् ?) ॥२६॥
तथा सुराष्ट्रानवकात् समागता
बालाकतोऽप्युत्तममध्यमाधमाः ।
जनाः प्रतिष्ठाविधिवीक्षणोत्सुका
ययुर्यथाद्रौ विततोर्ध्ववाहवः ॥ २७ ॥

अथ प्रवृत्ते सितमाघमास-
त्रयोदशीसंगतसूरिवारे ।
जनस्य यात्राकरणाय साधुः
चतुर्विधं संघममीलयत् सः ॥ २८ ॥

श्रीसिद्धसूरिप्रमुखैः स सूरि-
वर्यैः समं देसलसाधुधुर्यः ।
समरेण संघाग्रचरेण युक्तो
ययौ जलस्यानयनाय कुण्डे ॥ २९ ॥

दिक्पालकुण्डाधिपसूरमुख्य-
ग्रहादिपूजां विधिवद्विधाय ।
श्रीसिद्धसूर्याहितमन्त्रपूत-
नीरैः समरं(रः)पूरयति स्म कुम्भान ॥ ३० ॥

तूर्यादिनादैर्जयशब्दवादै-
र्गुहाप्रवेशद्विगुणैर्गिरीन्द्रः ।
गर्जंस्तदानीं सुमहं निरीक्ष्य
हर्षादिवाक्षे(क्ष्वे)डितमाततान ॥ ३१ ॥

सुवासिनीनां कलशान् शिरःसु
निवेश्य साधु समरः संसङ्घः ।

संजायमानेन महामहेन
समाययौ श्रीऋषभस्य चैत्ये ॥ ३२ ॥
स्थानेऽथ संस्थाप्य निपानपां सः (?)
संपी(पे)षणे मूलशतस्य साधुः ।
आरम्भमास्त्रयत प्रतिष्ठा-
प्रतानिनीमूलमहीसमस्य ॥ ३३ ॥

माता पिताऽपि श्वसुरः पतिश्च
श्वश्रूश्च जीवन्त्यपि पञ्च यस्याः ।
सुवासिनी मूलशतस्य योग्या
संपी(पे)षणे सैव भवेन्न चान्या ॥ ३४ ॥
एवंविधानां वनिताशतानां
चतुष्टयं तुष्टिकरं स्मरस्य ।
संगच्छति स्मोत्सवपूर्वकं ताः
क्रमादुपावेशयदाशु साधु ॥ ३५ ॥
श्रीसिद्धसूरिप्रभवोऽनुपूर्व्या
वासान् क्षिपन्ति स्म शिरस्सु तासाम् ।
सस्पर्द्धमेता अधिकाधिकार्थ-
व्ययादवापुः प्रथमाः शतानि ॥ ३६ ॥

ता योषितो मङ्गलगीतगान-
पूर्वं मुदा तं परिवर्तयन्ति ।
निर्वाणलक्ष्म्याः किल वश्यहेतो-
श्चूर्णं हि सज्जीक्रियमाणमस्ति ॥ ३७ ॥

स्मरोऽथ नानाविधपट्टसूत्राम्ब-
राणि दत्त्वा प्रवराणि ताभ्यः ।
चिक्षेप निक्षेपमिव स्वपुण्य-
स्यैतच्छरावे शतमूलचूर्णम् ॥ ३८

ततश्चतुर्दिक्षु जिनालयस्य
निवेशिता भान्ति नवाङ्कवेधः ।
चतुर्गुणीभूय किल स्मरस्य
पुण्यादुपेता निधयो नवानि ॥ ३९ ॥

यवाङ्कुरास्तत्परितः समन्ता-
न्न्यस्ता विभान्ति स्म विनीलवर्णा ।
हर्षान्नवानामपि किं निधीनां
रोमाङ्कुराश्चारव आविरासन् ॥ ४० ॥

देवाग्रतो मण्डपमध्यदेशे
साधुः स्मरोऽसौ चतुरस्रवेदीम् ।
हस्तोन्नतां कारयति स्म नन्द्या-
वर्ताह्वपट्टस्थितये पृथुं सा ॥ ४१ ॥

तदुपरि चतुरस्रस्तम्भसंरंभधीरं
कनककलशमौलिं मण्डपं साधुधुर्यः ।
व्यरचयदतुलश्रीस्वा(सा)र्वमानानुमानं
विविधवसनरम्भासङ्गशोभाभिरामम् ॥ ४२ ॥

तदन्तिके श्रीऋषभस्य मुख्य-
चैत्यस्य दण्डं सुमहद्ध्वजाढ्यम् ।
न्यवेशयत् सूत्रधरैः प्रतिष्ठा-
विधापनाय प्रगुणं विधाय ॥ ४३ ॥

नाभेयचैत्यं परितः प्रतिष्ठा-
हेतोः परेषामपि वेदिकाः स ।
अकारयच्चारुतराः पृथूच्चाः
सवालुका न्यस्तसमूलदर्भा ॥ ४४ ॥

द्वारे निबद्धा सहकारचारु-
दलावलीवन्दनमालिकाऽभात् ।

चैत्याश्रियोऽसौ नवनीलरत्न-
स्फू(स्फी)तेव मालागलभूषणाय ॥ ४५ ॥
श्रीसिद्धसूरिप्रभवोऽथ नन्द्या-
वर्तस्य पट्टं व्यलिखन् महार्घ्यं ।
गोरोचना-कुङ्कुम-चन्द्रकस्तू-
रिकादिभिश्चन्दनदत्तलेपम् ॥ ४६ ॥
अथो घटीकारघटे(टी)षु वारि-
पूर्णं विशन्तीषु भृतासु कुण्डे ।
वि(वे)लां विलोक्याश्वतिशुद्धबुद्धिः
श्रीसिद्धसूरिर्जिनमन्दिरेऽगात् ॥ ४७ ॥
चैत्ये तदानीमपरेऽपि सूरि-
वर्याः प्रतिष्ठाकरणाय गत्वा ।
स्वस्वासनेषु स्थितिमादधानाः
तस्था. (स्थु)स्वयं तद्विधिसावधाना ॥ ४८ ॥
श्रीदेसलः संघपतिः सपुत्रः
स्नातः शुचिश्चारुविशुद्धवस्त्रः ।
श्रीखण्डमुद्राङ्कितभालपट्टो
भक्त्याऽर्चि(ऽन्वि)तश्चैत्यमुपेयिवान् स ॥ ४९ ॥
उपासकाः केचिदपि स्वकीय-
थिंवा(बिंबा)न्युपादाय समीयिवांसः ।
केचित्प्रतिष्ठाविधिवीक्षणाच्छरा-
सनसम्पूर्णधियः (?) समीयु ॥ ५० ॥
श्रीसिद्धसूरिप्रभवः सरत्न-
सुवर्णमुद्राङ्गुलयो जिनस्य ।
51 पुरःस्थिताः कङ्कणपाणयोऽमी
दशान्वितं वस्त्रयुगं वसानाः ॥ ५१ ॥

देसलो ऽथ ऋषभदक्षिणपक्षे
साहणेन सहितो विनिविष्टः ।
वामतस्तु सहजः समरयुक्तो
जायते स्म जिनमज्ञनसज्जः ॥ ५२ ॥

सामन्तः शुभमतिरात्मबान्धवेन
संयुक्तोऽनुगुणगुणेन सांगणेन ।
आदायामलबल[दल]चामरो(रं) जिनस्या-
ग्रे तस्थौ स्थितिपरिपालकः कुलस्य ॥ ५३ ॥
चक्षु(क्षू)रक्षाहेतवेऽरिष्टवर्णा
न्यषो(स्ते)शस्योर स्थलेऽरिष्टमाला ।
विश्वे यत्स्याद् वस्तु विश्वप्रशस्यं
कर्तुं युक्ता जायते तस्य रक्षा ॥ ५४ ॥
रक्षाक्षमस्यापि जिनस्य रक्षा-
करे निबद्धा दिशतीव लोके ।
यदा(थाऽ)ऽम्ब(न्त)रैर्वैरिभिरेव विश्वं
पास्यत्यजस्रं परितप्यमानम् ॥ ५५ ॥

कर्पूर-चन्दन-फलाक्षत-पुष्प-धूप-
कालेयका-गरु-कुरङ्गमदादिकानि ।
वस्तूनि यानि किल सन्ति विधिप्रतिष्ठा-
योग्यानि तानि निखिलान्यपि ढौकितानि ॥५६॥

मदनफलसमेते ऋद्धिवृद्धि(द्धी) निबद्धे
जिनवर! तव पाणौ कारणं तत्र वेद्मि ॥
वितरति भविकेभ्यो यद्भवानृद्धि-वृद्धी
मदनफलविघातं यत्पुरा त्वं व्यधाश्च ॥ ५७ ॥
देसलादिश्रावकाणां कङ्कणान्येषु(ढ्व्येषु) पाणिषु ।
गुरुः कौसुम्भसूत्रस्य बध्नाति स्म समाहितः ॥५८॥

एवं प्रतिष्ठासामग्र्यां कृतायां सिद्धसूरयः
स्नात्रारम्भं मन्त्रपूर्वं स्नात्रकैरकारयन् ॥५९॥

अकारयत् तीर्थपतेर्जिनस्य
स्नात्राणि सर्वाणि यथाक्रमेण ।
श्रीसिद्धसूरि(रिः) स्वयमन्यसूरि-
योग्यानि तानि प्रजिघाय सद्यः ॥ ६० ॥
निवेशितायामथ लग्नघट्यां
श्रीसिद्धसूरिर्गुरुरेकचित्तः ।
असाधयत्साध्वधिवासनाया
लग्नं सुनैमित्तिकदिश्यमानम् ॥ ६१ ॥
आच्छाद्य जैनीप्रतिमां सुलग्ने
श्रीसिद्धसूरिर्वररक्तवस्त्रैः
श्रीखण्डवासादिभिरर्चयित्वा
मन्त्रैरथैतां सकलीचकार ॥ ६२ ॥
गत्वा गुरौ(रोः) पौषधवेश्म नन्द्या-
वर्तस्य पट्टं समरो स साधुः
सुवासिनीमूर्धनि संनिवेश्य
जगाम चैत्यं वृषभस्य शीघ्रम् ॥ ६३ ॥
नान्दीनिनादे प्रसरत्यनेक-
लोकेषु गायत्सु गुणान् जिनस्य ।
अमण्डयन्मण्डपवेदिकायां
सङ्घाधिपस्तं समरोऽथ पट्टम् ॥ ६४ ॥
श्रीसिद्धसूरिप्रभवोऽथ मध्यां(ध्या)-
दुपेत्य पट्टस्य समीपमाशु ।
कर्पूरपूरेण यथाविधान-
मपूपुजत् तं लिखितं सुयन्त्रम् ॥ ६५ ॥

नन्द्यावर्तं मण्डलं मण्डयित्वा
सिद्धाचार्या मान्त्रिका तान्त्रिकाश्च ।
कर्पूराद्यैरर्चयित्वा समुद्र (द्र)
वेद्व(भिन्द)न्ति स्मैतत्कलेर्दोषमाशु ॥ ६६ ॥
आगत्यागत्य सर्वेऽपि सूरयस्तस्य सादराः
पूजां सिद्धान्तविध्युक्तां नन्द्यावर्तस्य चक्रिरे ॥ ६७ ॥
श्रीसिद्धसूरयो भूयोऽप्यागत्य वृषभाङ्कितम्
संजज्ञिरे सावधाना लग्नसाधनसिद्धये ॥६८॥
कौसुम्भकङ्कणव्याजाद् रागो गुरुकरेऽलगत्
स्वजेतारं जिनं सान्त्वयितुमैच्छदिवासु[स्तु]तः ॥६९॥
लग्नेऽथ लग्ने निकटत्वमेतुं
श्रीसिद्धसूरिः करयोर्गृहीत्वा ।
कच्चोलिकां रूप्यमयीं सुवर्ण-
मयीं शलाकामपि सोद्यतोऽभूत् ॥ ७० ॥
आसन्नतामुपगते समये प्रतिष्ठा-
सम्बन्धिनि प्रथमतीर्थपतेः पुरःस्थाः ।
उच्चैःस्वरेण समयः समयः प्रवृत्तो
लोका इति स्म निगदन्ति समस्तदिक्षु ॥७१॥
वस्त्रं प्रतिष्ठासमये जिनेशात्
श्रीसिद्धसूरिप्रभवोऽपसार्य ।
आदाय सौवीर-सिताढ्ययोग-
मुन्मीलनं नेत्रयुगस्य चक्रुः ॥ ७२ ॥
श्रीविक्रमादुडुपवाजिकृशानुसोम-
संवत्सरे १३७१ तपसि मासि चतुर्दशेऽह्नि ।
पुण्ये शुभे धवलपक्षशशाङ्कवारे
लग्ने वृषे च बलशालिनि वर्तमाने ॥ ७३ ॥

तूर्यैस्त्रिकेषु निगदत्सु पठत्सु भिख्यां
वैतालिकेषु धवलध्वनिषूत्सल(ल्लस)त्सु ।
श्रीनाभिनन्दनविभोरचलप्रतिष्ठां
श्रीसिद्धसूरिगुरवोऽरचयन् प्रतिष्ठाम् ॥७४॥

श्रीवज्रस्वामिना पूर्वमिदानीं सिद्धसूरिणा
अत्र प्रतिष्ठा विहिता तेनैवं समता द्वयोः ॥७५॥

स्वतेजसा भासितभूमिभागः
स्वच्छस्वभावोऽलघुसत्त्वसारः ।
जिनेन्द्रमुद्राविहितस्थितिर्यो
युक्तं ततो वज्रतुलामवाप ॥ ७६ ॥

मुख्यप्रासाददण्डस्य सिद्धसूरेरनुज्ञया
वाचनाचार्यनागेन्द्रः प्रतिष्ठां निर्ममे तदा ॥७७॥

देसलः सकलसूनुसमेतश्चन्दनेन घनसारवरेण ।
आदिभर्तुरनुलिप्य शरीरं सत्सुमैरथ सम जयति स्म ॥७८॥

जिनस्य पुरतः पञ्च-पक्वान्नप्रमुखं बलिम्
देसलो ढौकयामास नानाविधफलानि च ॥७९॥

भव्यजनाः प्रथमस्य जिनेन्दोः
पाणिमुदीक्ष्य सकङ्कणबन्धम् ।
हर्षभरोन्नमदानमदङ्गा
नृत्यममी रचयन्ति सरङ्गाः ॥ ८० ॥

गीतरसालसदेहनिवेशाः
केऽपि जिनास्यनिवेशितनेत्राः ।
भूमिगता भविनश्च तदानी-
मादिजिनस्य गृणन्ति गुणालीम् ॥ ८१ ॥

केऽपि कुरङ्गमदादि गृहीत्वा
चारुविलेपनमस्य च चक्रुः ।

केऽपि पुनः सुमनोरथसारैः
पूजनमस्य जना रचयन्ति ॥ ८२ ॥
अङ्गुष्ठमात्रमपि यत्र निवेशितं सद्
बिम्बं भवत्यमितपुण्यकृते जनानाम् ।
तीर्थेऽत्र तीर्थविभुकारयितुः सुपुण्यं
यद्भावि तज्जिनपतिः प्रभुरेष वेद ॥८३॥
हस्तमात्रापि यद्देवकुलिका यत्र कारिता
वचनागोचरश्रेयोहेतवे जायते किल ॥ ८४ ॥
तत्र मुख्यजिनेशस्य चैत्योद्धारकरस्य यत् ।
पुण्यं कीर्तिश्च तस्य स्यात्कः प्रमातुं तदीश्वरः ॥८५॥
इति स्तुतिपरा लोका गीतनृत्यादिकारिणः ।
भव्या भव्यं सिद्धिसौधं संप्राप्तमिव मेनिरे ॥८६॥
एवं विधीयमानेऽथ भव्यलोकैर्महोत्सवे ।
अथारोहयितुं दण्डं देसलोऽभवदुद्यतः ॥ ८७ ॥
आरोढुमेतच्छिखरे सुखेन
पद्यामबध्नान्नृभिरेष साधुः ।
स्वर्गाधिरोहार्थमभूत् किलैषा
सोपानपङ्क्तिर्निबिडा जनानाम् ॥ ८८ ॥
श्रीसिद्धसूरिप्रभुदत्तहस्तः
श्रीदेसलः संघपतिः सपुत्रः ।
उद्दण्डदण्डेन पुरः प्रयाता
प्रासादमौलिं सममारुरोह ॥ ८९ ॥
प्रासादकलशे वासान् सिद्धसूरिगुरुः क्षिपन् ।
तमेव देशलकुले शुशुभे स्थापयन्निव ॥ ९० ॥
सूत्रधारैः सदाचारैर्देशलः संघनायकः ।
दण्डमस्थापयत् स्थाने कीर्तिस्तम्भमिषात्मनः ॥९१॥

अबन्धयत्कैरवबन्धशुद्धां
दण्डे जयन्तीमथ वैजयन्तीम् ।
कलेः करालस्य रिपोर्जये या
समुच्छ्रिता स्वीयजयध्वजेव ॥ ९२ ॥
सर्वज्ञमूर्द्धनि सिता वितताऽतिदीर्घा
कालेयहस्तकयुता रुरुचे पताका ।
मन्दाकिनीव दिवतोऽत्र समुत्तरन्ती
कोकान्विता भविकलोकपवित्रतायै॥ ९३ ॥

तथा सुतैः पञ्चभिरन्वितोऽसौ
तदा शरीरी करणैरिवाथ ।
स ज्ञानधर्मेष्वतिशुद्धबुद्धिः
सर्वेषु साधुः परभागमाप ॥ ९४ ॥
जावडिः किल पुरा विदधानो
नर्तनं दयितया सह यत्र ।
वायुना तृणमिवैष विधात्राऽ-
क्षिप्यत क्वचन कोऽपि न वेत्ति ॥ ९५ ॥

तत्र सूत्रितमनोरथसिद्धि-
र्देसलः सकलसङ्घसमेतः ।
नृत्यति स्म सह सूनुभिरुच्च-
र्भाग्यवान् विजयवानजनिष्ट ॥९६॥ (युग्मम्)
तदा मुदा पूर्णमनाः स नाना-
विधानि दानानि च याचकेभ्यः ।
नृत्यन् ददौ काञ्चन-वाजि-वस्त्र-
विभूषणादीन्यतुलानि साधुः ॥ ९७ ॥

नृत्यन्नसावामलसारकस्थः
सुवर्णरत्नाभरणाम्बराणि ।

फलान्यधःस्थाय जनाय चैत्याद्
ववर्ष कल्पद्रुरिवातिहर्षात् ॥ ९८ ॥

साधुः सहजपालोऽपि साहणः समरोऽपि च ।
सामन्त-साङ्गणावेते पञ्चापि ववृषुर्धनम् ॥९९॥

ददानान् वीक्ष्य दानानि वाञ्छितानि जनोऽर्थिनाम् ।
मेने मिथः स्नेहभाजः पञ्चामून् पाण्डवानिव ॥१००॥

सर्वे(र्वोऽथ) विस्मयमना मिथोऽवादीदिदं तदा ।
पाण्डवास्तीर्थमुद्धर्तुं किं त एवागताः पुनः ॥१०१॥

इति विधाय महोत्सवमुत्सुको
जिनपतेर्वदनाम्बुजवीक्षणे ।
अवततार ततः शिखरादसौ
शुभरसात्तरसा जिनमभ्यगात् ॥ १०२ ॥

महाध्वजाः पट्टदुकूलमय्या
बबन्धिरे देवशिरोविभागात् ।
निःसार्य बालानकमण्डपाग्रा-
दनेन यावन्नतु चैत्यदण्डम् ॥ १०३ ॥

हिमांशु-पट्टांशुक-हाटकानां
प्रत्येकमेकैकमनेकचित्रम् ।
छत्रत्रयं तत्र च देसलोऽदाद्
विश्वत्रयस्येश्वरतामिवेप्सुः ॥१०४॥

गङ्गातरङ्गसुभगां चमरीकेशसंभवाम्
स ददावादिनाथाय देसलश्चामरद्वयीम् ॥ १०५ ॥

तथाऽपरां हैमदण्डां निर्मितां रूप्यतन्तुभिः
स्वर्गराज्यमिवावाप्तुं चामरद्वितयं ददौ ॥ १०६ ॥

स्वर्णरूप्यमयमज्जनकुंभान्
पैत्तलानपि जिनाय ददौ सः ।

देसलः स्वसुकृतालिमणीनां
शैलमूर्धनि निधीनिव कर्तुम् ॥ १०७ ॥

आरात्रिकं मङ्गलदीपमप्यसौ
साधुर्ददौ रूप्यमयं मनोहरम् ।
आरात्रिकं स्थानमवाप्तुमुत्सुक-
स्तथा ल(स)षन्मङ्गलमेव यत् सदा ॥१०८॥

चन्द्रोदयान् सर्वचतुष्किकासु
तथैव सर्वेष्वपि मण्डपेषु ।
अबन्धयत्पट्टदुकूलमूलान्
मुक्ताफलश्रेणिकृतावचूलान् ॥ १०९ ॥

अपूरयन्मेरुमसौ जिनस्या-
क्षतैरखण्डैः पुरतोऽनघस्य ।
मुद्गैः पुगैर्मोदक-नालिकेरै-
र्विभूषणैर्देसलसङ्घनाथः ॥ ११० ॥

स्नात्रोत्सवो मेरुगिरौ पुरा यथा
भवदसौ जन्मनि यज्जिनेशितुः ।
तथा महैर्देसलसाधुनाऽधुना
तस्यैव चक्रे किल मज्जने विधिः ॥ १११ ॥

अथापरान् सर्वजिनानुपोषितः
शुचिर्व्रतस्थः परिपूज्य देसलः ।
पुत्रैश्च पौत्रैश्च सहानुयायिभि-
श्चक्रे जिनस्य प्रथमं दशाहिकम् ॥ ११२ ॥

सारेण घनसारेण श्रीखण्डेन विभोर्वपुः
आर्चयद्देशलस्तत्स्यादखण्डश्रीभरास्पदे ॥११३॥

स सुमनाः सुमनोभिरथो जिनं
बकुल-केतकी-चम्पक-जातिभिः ।

प्रथमनाथमपूपुजदायतौ
समभिगन्तुमनाः सुमनःश्रियम् ॥ ११४ ॥
कर्पूरपूरैः स पलप्रमाणैः
संवर्तितैरादिजिनस्य देहम् ।
विलेप्य रात्रौ मृगनाभिपङ्कै-
रमण्डयत्साहणपालसाधुः ॥ ११५ ॥
मालती-केतकी-मल्ली-चम्पकाद्यैः सुमैर्विभोः
लक्ष्यसंख्यैर्महापूजां विचित्रां साहणो व्यधात् ॥११६॥
साधुः स्मरो जिनपुरो घनसारसारं
कालागरुं ज्वलति सज्ज्वलने जुहाव ।
धूमच्छलेन किल देसलदुष्कृतानि
यान्तीव तस्य सुकृतेन विहेठितानि ॥ ११७॥
देसलः सहजपालसंयुतो
मण्डपे निहितदृष्टिरर्हति ।
प्रेक्षणक्षणमसावकारयत्
तीर्थनाथगुणसावधानधीः ॥ ११८ ॥
श्रीसिद्धसूरिगुरुपादयुगं प्रणम्य
प्रातर्यतीन् सुविहितानथ भक्तपानैः ।
सम्पूर्णतृप्तिजनकैः प्रतिलाभ्य सर्वान्
साधुः स्वसूनुसहितोऽकृत पारणं सः ॥११९॥
चारणान् गायनान् भट्टानखिलानपि भोजनैः
यथेष्टं भोजयामास देसलोऽ व(क)लवैभवः ॥ १२० ॥
योगिनामथ दीनानामनाथानां दरिद्रिणाम्
अवारितं भोजनार्थं सत्रागारमकारयत् ॥१२१॥
एवं प्रवर्तयन् दानं प्रत्यहं संघनायकः ।
विभोर्दश दशाहानि चक्रे धर्मवराशयः ॥ १२२ ॥

एकादशेऽथो दिवसे प्रभाते
श्रीसिद्धसूरिस्वगुरोः करेण ।
श्रीदेसलः कारयति स्म संघ-
युतो विभोः कङ्कणबन्धमोक्षम् ॥ १२३ ॥
विश्वप्रभुं स्वर्णकिरिट-हार-
श्रीकण्ठ-भूषाङ्गद-कुण्डलाद्यैः ।
स्वकारितैर्नव्यविभूषणैस्त-
मपूपुजद्देसलसंघनाथः ॥ १२४ ॥
अन्येऽपि सर्वे भविनः क्रमेण
महाध्वजाश्चारुतरा बबन्धुः ।
पुरोऽस्य मेरून् बिभरांबभूवु-
रकारयन् स्नात्रमथो जिनस्य ॥ १२५ ॥
संघे समागतैः संघपुरुषैः स्वस्ववारकैः
सर्वैरपि महापूजादानसत्राणि चक्रिरे ॥१२६॥
संघेनाथ समन्वितः सुगुरुभिः पार्श्वेस्थितो देसल-
स्तस्थावादिजिनेश्वरस्य पुरतो हस्तोद्धृतारात्रिक
पुत्रौ चामरधारिणौ स्थितिमितौ तद्बाहुपक्षद्वये
साधू साहणसाङ्गणौ गुणनिधी धर्मे सदा सोद्यमौ॥१२७
सामन्त-सहजपालौ पक्षयोरुभयोरपि
करात्तवरभृङ्गारौ साधोर्द्वावप्यवस्थितौ ॥१२८॥
चन्दनस्य पितुः पादावाराभ्याऽथ नवाप्यसौ ।
अङ्गानि तिलकैः साधुर्भक्तिमानार्चयत् स्मरः ॥१२९॥
श्रीखण्डतिलकेऽलीके सोऽखंडान् तन्दुलाक्षतान् ।
न्यवेशयत्स्मरस्तत्स्थभाग्यपुष्टिकृते किल ॥१३०॥
मालती-बकुल-चम्पक-मल्ली-
गुम्फिता जनयितुः सुममाला ।

स्थापिता *निगरणे समरेण
श्रीस्वयंवरकरस्रागिवाभूत् ॥ १३१ ॥
अन्येऽपि संघपुरुषा मलयोद्भवेन
साधोर्विधाय पदयोस्तिलकेऽलिके च ।
आरात्रिकं च परिपूज्य तदीयकण्ठे
मालां क्षिपन्ति रचयन्ति सुवर्णवृष्टिम् ॥ १३२ ॥
श्रीजिनेन्द्रगुणगीतनायकान्
गायनान् समरसाधुरात्मना ।
स्वर्णकङ्कण–तुरङ्ग–वाससां
दानतो +धनपुषामतोषयत् ॥ १३३ ॥
विधायारात्रिकमसावादिदेवस्य देसल ।
संपूज्य प्रणिपत्याथ मङ्गलदीपमाददे ॥ १३४ ॥
द्वारभट्टादयो भट्टाः श्रीयुगादिजिनेशितुः।
सिंहनादनिनादेन पठन्ति स्म गुणावलीम् ॥१३५॥
देसलस्य समरस्य च साधोः
कीर्तिवल्लिजलवाहसदक्षाम् ।
बन्दिनः प्रमुदिता बिरदाली–
मुच्चरन्ति विहितोन्नतहस्ताः ॥ १३६ ॥
रजत–स्वर्ण–रत्नानां वाजि–वारण–वाससाम् ।
द्वारभट्टादिभट्टानां ददौ दानं स्मरो मुदा ॥१३७॥
उद्दीप्य कर्पूरदलैः सुगन्धैः
श्रीदेसलो मङ्गलदीपमुच्चैः ।
उच्चारयामास समं महद्भि–
स्तूर्यादिवादित्रगणैर्नदद्भिः ॥ १३८ ॥

---

* निगीर्यंते अन्नादिकमनेनेति निगरणं गलमित्यर्थ ।

\+ धनं पुष्णन्ति तेषां, मूल्यवतामित्यर्थः, स्वर्णादिपद-स्य विशेषणमेतत्

आकुञ्च्य वामं निजजानुमास्यं
निवेश्य भूमौ शिरसोद्वहंश्च ।
संयोजितं पाणियुतं ससंघः
शक्रस्तवेनादिजिनं नुनाव ॥ १३९ ॥

श्रीसिद्धसूरयोऽप्येवं स्थित्वा संघपुरस्सराः ।
शक्रस्तवोर्ध्वमादीशं स्तोतुमारेभिरे जिनम् ॥१४०॥

देव ! त्वदीयवदनं सदनं सुधायाः
संवीक्ष्य [दृक्] दृष्टिविषभाग् भुजगी ममैषा ।
मिथ्यात्वमोहगरलं विरलं विधाय
सम्प्रत्यमन्दमदसम्मदमाससाद ॥ १४१ ॥

देव ! त्वदास्यशशिनोऽमृतमुख्यकुण्डात्
संज्ञानिबद्धवचनं वचनं सुधामुक्
प्राप्तं निपीय भवदावभवं स्वदाहं
संत्यज्य निर्वृतिमना अधुनाऽस्मि जातः ॥१४२॥

देव ! त्वदीयशय एष विशेषपुण्यत्-
पीयूषवर्षसमतं मदमादधाति ।
मन्ये त्रयो रति-कुदृष्टि-विकारदोषा
यातास्ततो जिन ! सुदर्शनतां गतोऽस्मि ॥१४३॥

देव ! त्वदीयमिह भालतलं विलोक्य
शुद्धाष्टमीकरसुधाकरसंनिकाशम् ।
तत्कान्तिवीचिचयपुष्टमहो मदीयं
चक्षुश्चकोरयुगमद्य बभूव सद्यः ॥ १४४ ॥

देव ! त्वदीयवपुरेतदगण्यपुण्य-
संभारसंभृतमनन्तशुभस्य हेतुः ।
दत्तेऽमृते शिवसुखं विमुखं भवानां
भव्याङ्गिनामपि निरीक्षितमेकवारम् ॥१४५॥

देव ! त्वदीयरसना रसनायकस्य
वाक्यामृतस्य सरसी सरसैर्यदेषा ।
स्वस्पन्दसंभववचोनिचयप्रपञ्चैः
शीतीकरोति सततं वपुरस्मदीयम् ॥१४६॥

त्वल्लोचने जिनपतेऽमृतसिन्धुनीमे
संपेतुषी वपुषि विश्वभवे भवेताम् ।
संजायतेऽत्र भवसंभवदुःखदाह-
दाहोपशान्तिरखिलेऽपि यथा जिनेश ! ॥१४७॥

देव ! त्वदीयचरणौ शरणं भवेतां
शोणच्छवी लवणिमामृतलक्षिताङ्कौ ।
संसारमारवपथभ्रमणातुराणां
संसारिणां सुकृतवारिविवर्जितानाम् ॥१४८॥

इत्यमृताष्टकसंस्तवसंस्तुत ! परमप्रमोदतो नाथ ! ।
श्रीनाभिनन्दनजिन ! प्रसीद देह्यमृतसौख्यानि ॥१४९॥

इति स्तुत्वा जगन्नाथमादिनाथं जिनं मुदा ।
श्रीसिद्धसूरयः सार्द्धं साधुना पुनरागमन् ॥ १५० ॥

पश्चापि सूनवोऽप्येवं सर्वसंघनरैः समम् ।
आरात्रिकं विदधिरे दधाना मुदमद्भुतम् ॥१५१॥

एवं प्रतिष्ठामहिमानमादि-
नाथस्य कृत्वा पुरतो जिनस्य ।
अभीष्टसिद्ध्योल्लसितप्रमोदो
ननर्त साधुः सुतसंघयुक्तः ॥ १५२ ॥

साधुस्त्रिलोकीविभुतामवाप्तां
विचिन्तयंश्चेतसि नृत्यति स्म ।
हर्षोल्लसद्धस्तयुगो जिनाग्रे
विज्ञप्तिमेवं विदधे च साधुः ॥ १५३ ॥

प्रभो ! भवाम्भोनिधिमध्यमग्न-
प्राणिप्रतानोद्धरणैकधीर ! ।
मम प्रसद्याद्य सदैव देव !
पुनः पुनर्दर्शनमेव दद्याः ॥ १५४ ॥
असावनुज्ञाप्य युगादिदेवं
कपर्दियक्षालयमाजगाम ।
अपूपुजन्मोदकनालिकेरै-
र्यक्षं स साधुर्लपनश्रियाऽपि ॥ १५५ ॥
अबन्धयद्देवगृहेऽस्य साधु-
र्महाध्वजां पट्टमयीमपूर्वाम् ।
लसद्यशोमण्डपमण्डनाय
समुत्सृतेयं किल वैजयन्ती ॥ १५६ ॥
व्यजिज्ञपत् साधुरमुं कपर्दि-
यक्षं जिनार्चाविधिबद्धकक्षम् ।
यक्षेश ! मे धर्मविधौ सहायः
सदा भवेर्विघ्नविनाशकस्त्वम् ॥ १५७ ॥
एवमभ्यर्थ्य यक्षेशं देसलः संघनायकः
श्रीसिद्धसूरिभिः सार्द्धं शैलोत्तारोद्यतोऽभवत् ॥१५८॥
तीर्थे स्थित्वा विंशतिं वासराणि
साधुः श्रीमान् देसलः सूनुयुक्तः ।
नत्वा सर्वाण्यर्हतामत्र बिम्बा-
न्याशु प्रातः पर्वतादुत्ततार ॥ १५९ ॥
क्रमेण पञ्चभिः पुत्रैः साधुः शार्ङ्गीव पाण्डवैः ।
विराजमानपार्श्वोऽसावश्ववारशतैर्वृतः ॥१६०॥
वाद्येषु वाद्यमानेषु महामहपुरस्सरं ।
आययौ सह संघेन संघावासेषु देसलः ॥ १६१ ॥

पक्वान्नैः पञ्चवर्णैरमृतकरसितैः स्वादुभिर्मोदकाद्यैः
सद्गन्धैः शालिसूपैः सुरभिभवघृतैर्व्यञ्जनैश्चाप्यनेकैः ।
शुद्धैः श्रीदेसलोऽसौ मुनिवरवृषभानात्मनाऽभ्यर्थ्य गत्वा
*न्यक्षानिक्षेपतोऽथो अमलिनमनसाऽपूपुजत्पूजनार्हान् ॥
सुस्वादुभिर्विविधभोजनपानकाद्यै-
रामन्त्र्य संघमखिलं सपरिच्छदं सः ।
साधुः सुधासमवचःसुभगात्मभक्त्या
सन्तोष्य सन्मतिरभोजयदादृतः सन् ॥१६३॥
चारणान् गायनान......भट्टानपि च याचकान् ।
यथेच्छया रसवत्याऽभोजयद् देसलोऽखिलान् ॥१६४॥
विदेशायातदीनानां दुःस्थानामथ योगिनाम् ।
प्रीणनार्थमवारितसत्राका(गा)रमकारयत् ॥ १६५ ॥
आचार्य-वाचनाचार्यो-पाध्यायानां महोत्सवे ।
पदस्थानां पञ्चशतान्यायातान्यभवन्ननु ॥१६६॥
साधुः श्रीसहजपालो महाराष्ट्रतिलङ्कतः ।
सूक्ष्माणि यानि चारूणि वासांस्यानयति स्म सः ॥१६७॥
पदस्थानां पञ्चशतीमपि तैर्वसनैर्वरैः ।
सानन्दः परया भक्त्या देसलः प्रत्यलाभयत् ॥१६८॥
साधुर्नानाविधैर्वस्त्रैरन्यानपि तपोधनान् ।
सहस्रद्वितयोन्मानान् प्रत्यलाभयतेप्सितैः ॥ १६९ ॥
चारणानां सप्तशतीं त्रिसहस्रीं च बन्दिनाम्
गायनानां सवृन्दानां सहस्रमधिकं स्मरः ॥ १७० ॥
दानमण्डपमासीनो वाजि-काञ्चन-वाससाम् ।
तन्मनोवाञ्छितैर्दानैः ससन्मानममानयत् ॥ १७१ ॥

---

* न्यक्षा-न्यक्कृतिः, तस्या निक्षेपः-दूरीकरणं तस्मात् सन्मानपूर्वकमित्यर्थः

भग्नारघट्टा अवटाभावादुच्छिन्नपादपाः ।
वृतैर्विना च याः काश्चिदभूवन् स्वमवाटिकाः ॥१७२॥
समरः सर्वा अपि ता नित्यपूजाकृते प्रभोः ।
वितीर्य मालाकारेभ्यो धनं चक्रे पुनर्नवा ॥१७३॥ युग्मम्
जिनेन्द्रसेवानिरतानशेषान्
पूजाकृतो गायनसूत्रधारान् ।
भट्टादिकानीहितवृत्तिदाना-
दस्थापयद् वाग्भटवत् स लोकान् ॥ १७४ ॥
एवमारोप्य तीर्थेऽस्मिन् देसलः पुण्यपादपम् ।
उज्जयन्तमथो तीर्थं नन्तुं चक्रे उपक्रमम् ॥ १७५ ॥
देवालयश्चचालाथ सुमुहूर्ते पुरःस्थितः ।
तस्यानु देसलः सर्वसङ्घलोकान्वितोऽचलत् ॥१७६॥
अमरावत्यादिपुरग्रामेषु जिनशासनम् ।
भासयन्नद्भुतैः कृत्यैरुज्जयन्तगिरिं ययौ ॥ १७७ ॥
श्रीजीर्णदुर्गपुरनाथमहीपदेवः
श्रुत्वा समेतमुपदुर्गममुं ससंघम् ।
श्रीदेसल-समरगुणैरिव कृष्टचित्तः ।
संघेश्वराभिमुखमेष समाजगाम ॥ १७८ ॥
वज्रचक्राङ्कितकरौ महीपालसमरौ तदा ।
इन्द्रोपेन्द्राविवाभातां मिलितौ प्रीतितत्परौ ॥ १७९ ॥
परस्परं समालिंग्य तौ निविष्टौ समासने ।
क्षेमप्रश्नादिकालापैः प्रीत्या द्वावप्यहृष्यताम् ॥१८०॥
विविधोपायनैः साधुर्महीपालमतोषयत् ।
सोऽपि प्रसाददानेन द्विगुणेन समरं पुनः ॥ १८१ ॥
श्रीमहीपालदेवेन समरेण सहयायिना ।
संघपतेर्देसलस्य प्रवेशमहिमाऽऽदधे ॥ १८२ ॥

तेजःपालपुरासन्नान् संघवासान्महीपतिः ।
स्मरेण कारयित्वाऽथ स्वावासं स्वयमाययौ ॥ १८३ ॥

उज्जयन्तगिरिमस्तकमौलिं
नेमिनं जिनमथो अभिनन्तुम् ।
देसलः सकलसंघसमेतोऽ-
प्यारुरोह गुरुभिः सह शैलम् ॥ १८४ ॥

महाध्वजा-ऽवारितसत्र-पूजा-
दानादिकं सर्वविधिं स तत्र ।
संघाधिपो देसलसाधुधुर्यः ।
शत्रुञ्जये तीर्थ इवाततान ॥ १८५ ॥

प्रद्युम्न-शाम्बयोस्तुङ्गे शिखरे चावलो(किते) ।
कल्याणत्रयमुख्येषु प्रासादेष्वखिलेष्वपि ॥ १८६ ॥
देसलो विदधद्यात्रां महापूजा-महाध्वजाः ।
ददौ स्वपूर्वजानुच्चैरुद्दधार धियां निधिः ॥ १८७ ॥

अम्बामथानर्च सपुत्र-पौत्रः
श्रीदेसलः संघपतिर्यदैव ।
तदैव तुष्टा विततार पुत्र-
लाभेन वृद्धिं समरस्य सद्यः ॥ १८८ ॥

युक्तमम्बा सुतान् दत्ते सदैवाङ्कस्थितात्मजा ।
विश्वेऽपि विश्रुतमिदं यत्सदेव वितीर्यते ॥ १८९ ॥
समरस्य सुतप्राप्तिसंप्राप्त(मह)दुन्नतिः ।
देसलः श्रीमदम्बाया विशेषणाकृतार्चनम् ॥ १९० ॥
देसलः सुतलाभत्वात् वर्धापनमकारयत् ।
सद्यः फलति धर्मोऽयमिति चेतसि चिन्तयन् ॥१९१॥

श्रीगजेन्द्रपदकुण्डवारिणि
भव्यलोकगणदोषवारिणि ।

स्नानमाशु विरचय्य देसलो ।
दत्तवानयमघे जलाञ्जलिम् ॥ १९२ ॥
स्नात्वा मृदुहृदयनिभे सहजादयोऽपि
श्रीदेसलस्य तनयाः सनया हृदेऽस्मिन् ।
संसारघोरवनसंचरणप्रसूत-
[ग्लानिं]क्षणादपनयन्ति मुद भजान्ति ॥१९३॥
दिनानि दश तीर्थेऽस्मिन् स्थित्वा देसलसङ्घपः ।
श्रीनेमिनमनुज्ञाप्य गिरिनारादवातरत् ॥ १९४ ॥
मुग्धराजस्तदा देवपत्तनाधिपतिर्मुदा ।
साधोः समरसिंहस्य दर्शनोत्कण्ठितोऽभवत् ॥१९५॥
स्वप्रधानान् मुग्धराजः प्रैषीत् समरसन्निधौ ।
इति विज्ञप्तिगर्भं च स्वलेखं तत्करे ददौ ॥ १९६ ॥
कलाभृता यद्भवता विधेयः शुचिना तथा ।
मम चित्तचकोरोऽयं यथा स्यात्प्रीतिमान् स्मर ! ॥१९७॥
स्मरो विज्ञाय लेखार्थं तत्राभूद् गमनोत्सुकः ।
एकं बुभुक्षितोऽन्यच्च जातं किल निमन्त्रणम् ॥१९८॥
श्रीमहीपालदेवस्य मुत्कलापनहेतवे ।
जगामोपायनकरः समरः स्मरसंनिभः ॥ १९९ ॥
सन्तुष्टः श्रीमहीपालः समराय ददौ स्वयम् ।
त्रिपट्टांशुकसम्बद्धं वाजिनं श्रीकरीमपि ॥ २०० ॥
श्रीमुग्धराजनृपलेखसमागमेन
संबर्हितोद्यमगुणोऽनणुहर्षतर्षः ।
श्रीदेसलः सकलसंघपरीतपार्श्वः
श्रीदेवपत्तनपुरोपरि संचचाल ॥ २०१ ॥
श्रीधामवामनपुरीप्रमुखेषु सर्व-
स्थानेषु चैत्यपरिपाटिमहान् दधानः ।

संघाधिपो विधुविभास्वरचारुकीर्तिः
श्रीदेवपत्तनमियाय +समुत् सहायः ॥२०२॥
मुग्धराजनृपतिः समरसाधुं
ततो निशम्य निकटे समुपेतम् ।
तद्विलोकनरसोल्लसदङ्ग-
स्फारसारपुलकोऽजनि सद्यः ॥ २०३ ॥
श्रीसोमेश्वरश्छत्रचामरादिभिरन्वितः ।
स नृपः सपरीवारः संघाभिमुखमाययौ ॥ २०४ ॥
समरो मुग्धराजश्च स्वहस्तोल्लासिताम्बरौ ।
द्वावप्यागत्य मिलितौ सूर्या-चन्द्रमसाविव ॥२०५॥
मुग्धराजस्तमालिङ्ग्य संजज्ञे हर्षनिर्भरः
तत्पृष्टकुशलः साधुः सुधामग्न इवाभवत् ॥ २०६ ॥
मिथोऽथ प्राभृतैर्दत्तैरादत्तैस्तावुभावपि ।
मन्येतां शुभोदर्कं प्रीतिमन्तौ स्वसङ्गमम् ॥२०७॥
अथ श्रीदेसलः संघनाथः समरपुरस्सरः।
स चतुर्विधसङ्घेन सह देवालयेन च ॥ २०८ ॥
जटाधरेण मुख्येन तत्पुरस्सरगामिना ।
गण्डैश्च वर्धितोत्साहः स्वयमुत्सवकारिभिः ॥२०९॥
श्रीदेवपत्तनपुरे द्वारोत्तम्भिततोरणे ।
लसत्पताके सर्वत्र शचीपतिरिवाविशत् ॥ २१० ॥
[ त्रिभिर्विशेषकम् ]
श्रीसोमेश्वरदेवस्य पुरतः सम्मतः सताम् ।
हर्षेण मुग्धराजस्य सोत्सवं प्रहरं स्थितः ॥ २११ ॥
पूर्वं सम्प्रति-शातवाहन-शिलादित्या-मराजादिभि-
र्भूपैर्भूरिधनाधिपैः कृतयुगोत्पन्नैश्च जैनैरपि ।

---

+ मुदा सहितः समुत्, भयेन सह सहायः

श्रीचौलुक्यकुमारपालनृपतिभ्रष्ठेन चक्रे न य-
ज्ञातं देसलभाग्यतस्तदधुना काले कलावप्यहो! ॥२१२॥
श्रीजैनशासनस्येशशासनस्य स्वभावजम् ।
मिथो वैरम[प]ह्नुत्य सौ (सु?) ह्रत्पर्षदिवारुचत् ॥२१३॥
संघं संस्थापयामास संघपः प्रियमेलके।
भव्ये युगेऽपि यन्नाभूत् तदभूद् भाग्यतोऽस्य हि ॥२१४॥

तथा चोक्तम्—

नैतस्मिन् कति नाम सङ्घपतयः क्षोणीतले जज्ञिरे
किन्त्वेकोऽपि न साधुवीरसमर ! त्वन्मार्गमन्वग्ययौ।
श्रीनाभेयजिनोद्धृति. प्रतिपुरं त्व(त)त्स्वामिनोऽभ्यागतिः
श्रीसोमेशपुरप्रवेश इति य (ते)कीर्तिर्नवा वला(ल्ग)ति॥

तत्राप्यवारितं दानं ददानोऽष्टाह्निकामहम् ।
विदधे जिनचैत्येषु पूजां सोमेश्वरस्य च ॥ २१६ ॥
मुग्धराजनृपात्प्राप्य श्रीकरीं वाजिनं स्मर ।
चचालाजाधरपुरे नन्तुं पार्श्वं सदेसल ॥२१७॥

यो वार्द्धिमध्यान्निरगाद् वितीर्या-
देशं तरीशस्य पयोधिभाजः ।
स विद्यते तद्विहिताऽसमान
चैत्यास्थितिस्तत्र जिनेशपार्श्वः ॥ २१८ ॥

महाध्वजा-महापूजामुख्यं तत्र महोत्सवम् ।
विधाय कोडीनारेऽगाद्देसलः संघसंयुत. ॥ २१९ ॥

यत्राम्बिका विप्रवधूर्मुनिभ्यो
दत्त्वाऽन्नदानं पतिरोषतोऽथ ।
आदाय पुत्रद्वयमुज्जयन्ते
ययावसौ नेमिजिनं स्मरन्ती ॥ २२० ॥
नत्वा जिनं चूततरोस्तलेऽगात्
फलैः सुतौ प्रीणयितुं क्षणेन ।

आयान्तमात्मीयपतिं निरीक्ष्य
भयेन वित्रस्तविरक्तचित्ता ॥ २२१ ॥
श्रीनेमिनाथं शरणं श्रयन्ती
झंपां ददौ पर्वतशृङ्गभागात् ।
विपद्य तीर्थेऽत्र बभूव सद्योऽ-
धिष्ठायिकाऽम्बाभिधदेवताऽसौ ॥ [त्रिभिर्विशेषकम्]
कोडीनारेऽपि तच्चैत्यमित्यभूत्पूर्ववासतः ।
तामर्चयित्वा कर्पूरकुङ्कुमाद्यैरनेकधा ॥ २२३ ॥
श्रीदेसलः सङ्घपतिर्दत्त्वा तत्र महाध्वजाम् ।
कृत्वा महामहं द्वीपवेलाकूले क्रमादगात्॥२२४॥युग्मम् ॥
प्रीत्या समरसिंहस्य मूलराजस्तदीश्वरः।
नावाऽऽयोज्यापरां नावमुपर्यस्थापयत्कटान् ॥ २२५ ॥
देवालयं तदुपरि ससंघं समहोत्सवम् ।
समारोप्यानयन्मध्ये वियते(ता) च जलाध्वना ॥२२६॥
हरिपालो व्यवहारी तत्रास्ते कोटिनायकः ।
देसलस्य ससंघस्य वात्सल्यं विदधे सुधी ॥ २२७ ॥
तत्राप्यष्टाहिकां कृत्वा दानं दत्त्वाऽर्थिवाञ्छितम् ।
पुनः संघपतिस्तीर्थं शत्रुञ्जयमुपागमत् ॥ २२८ ॥
इतश्च श्रीसिद्धसूरिगुरवः किंचिदामयात् ।
सावाधा जज्ञिरे जीर्णदुर्गे तदवतस्थिरे ॥ २२९ ॥
संघोऽपि परिवारोऽपि संभूय गुरुमेकदा ।
व्यजिज्ञपत् प्रभो ! तावत्सावाधं भवतां पुनः ॥२३०॥
ज्ञायते ज्ञानहीनत्वान्नायुः केनापि सम्प्रति ।
तत्सूरिमन्त्रं कस्यापि शिष्यस्य प्रतिपाद्यताम् ॥२३१॥
स्वाभिप्रायं तदा प्राह सर्वेषां पुरतो गुरुः ।
आयुर्मे पञ्च वर्षाणि मासो नव दिनानि च ॥२३२॥

विद्यतेऽद्यापि शिष्योऽपि श्रीसत्याकथितोऽन्तिकात् ।
मुञ्चामि नाहं तत् सूरिं करिष्ये समये परम् ॥२३३॥
तदाकर्ण्य समग्रोऽपि सङ्घो भूयो व्यजिज्ञपत् ।
यद्यप्येवं प्रभोऽस्माभिः किञ्चिद्विज्ञाप्यते परम् ॥२३४॥
श्रीपूज्यैः स्थावरं तीर्थं साम्प्रतं स्थापितं यथा ।
कृत्वा प्रसादमस्मासु जङ्गमं स्थाप्यतां तथा ॥२३५॥
अथ तद्विज्ञप्तिप्रीताः प्रभुश्रीसिद्धसूरयः ।
शिष्यं मेरुगिरिं नाम्ना कक्कसूरिं गुरुं व्यधुः ॥२३६॥
त्रयोदशशतैरेकसप्तत्याऽभ्यधिकैर्गतैः ।
फाल्गुने मासि पञ्चम्यां शुक्लायामभवत् पदम् ॥२३७॥
तदा पदस्थापनायाश्चैत्रगच्छसमुद्भवः ।
जगौ श्लोकमिदं(मं) सद्यो भीमदेवाह्वयः सुधीः ॥२३८॥
कः क सूरिर्न मां (तं)स्तौति कक्कसूरिगुरूदयं ।
यस्योदये प्रजायन्ते सर्वा कल्याणसिद्धयः ॥२३९॥
धारसिंहस्तत्र मन्त्री सूरे पदमहोत्सवम् ।
चकार सर्वसूरीणां व्रतिनां प्रतिलाभि(भ)नाम् ॥२४०॥
दिनानि पञ्च तत्रैव स्थित्वोत्सवपुरस्सरम् ।
भूयो देसलसंघस्य गत्वा शत्रुञ्जयेऽमिलत् ॥२४१॥
शत्रुञ्जयमहातीर्थे पुनर्यात्रां विधाय स ।
देसलो गुरुभिः सार्धमगमत् पाटलापुरे ॥२४२॥
पुरा जरासिं(सं)धचतुर्भुजाहवे
हरेर्बले वैरिविसंस्थुलेऽखिले ।
श्रीनेमिनाथो नृपलक्षमेक
प्रपूर्य शखं विजिगाय यत्र ॥ २४३ ॥
तदा संस्थापितस्तत्र श्रीनेमिर्विष्णुना जिनः ।
तं जिनं तत्र सम्पूज्य शंखेश्वरपुरं ययौ ॥२४४॥

शंखः श्रीनेमिनाथेन यज्जरासन्धविग्रहे ।
नृपलक्षजयेऽपूरि तस्मात्शंखेश्वरं पुरम् ॥ २४५ ॥
तत्पुरालंकृतिः श्रीमानास्ते पार्श्वजिनेश्वरः ।
यश्चिरं प्राणतस्वर्गाधीश्वरेण पुराऽर्चितः ॥२४६॥
चतु·पञ्चाशल्लक्षाणि वर्षाणां प्रथमे गवि ।
पूजितस्तदधीशेन भावभूषितचेतसा ॥ २४७ ॥
लक्षाणि तत्प्रमाण्येव चन्द्रेन्द्रेणाथ पूजितः ।
सूर्येन्द्रेण तत्प्रमा(नि)णि लक्षाणि परिपूजितः ॥२४८॥
पातालेऽपि च तावन्ति वर्षलक्षाणि तक्षक ।
पन्नगाधिपतिर्भक्तिसंयुतो यमपूपुजत् ॥२४९॥
पातालात्प्रतिवासुदेवसमरे श्रीवासुदेवेन यः
सैन्ये मारिभयार्दिते विलसति श्रीनेमिनाथाज्ञया ।
तच्छान्त्यै प्रकटीकृतोऽथ सहसा तत्स्नात्रवारिच्छटा-
संयोगेन जनोऽखिलोऽपि विदधे नीरुक् स पार्श्वः श्रिये॥
तत्र तीर्थे महादान–महापूजा–महाध्वजाः ।
कृत्वा सर्वविधिं साधुः श्रीपार्श्वं प्रणिपत्य सः ॥२५१॥
हारिजनामनि ग्रामे गत्वा श्रीऋषभं जिनम् ।
नत्वाऽथ पत्तनपुरे परिचक्रे प्रयाणकम् ॥२५२॥ [युग्मम्]
श्रीपत्तनपुरासन्ने ग्रामेऽसौ सोइलाभिधे ।
देसलः समरेणात्र संघावासानकारयत् ॥२५३॥
श्रीदेसलं कुशलिनं सह संघलोकै-
राकर्ण्य पत्तनजनो निकटाभ्युपेतम् ।
हर्षोल्लसत्पुलकसंगविभूषिताङ्गः
संघस्य सम्मुखमियाय गताध्यपायः ॥२५४॥
सर्वोऽप्यहंपूर्विकया समेतो
जनस्तदानीं किल देसलस्य ।

संघाधिपस्य समरसंयुतस्या-
नर्चं क्रमौ चन्दनहेमपुष्पैः ॥ २५५ ॥
संस्पृश्य केशैश्चरणौ तदीयौ
भक्त्याऽनमत् देवपदाविवायम् ।
अमन्यत श्रीविमलाचलस्य
तीर्थस्य यात्रा विहिताऽऽत्मनैव ॥२५६॥
चिक्षेप हर्षादथ पौरलोकः
कण्ठे तदीये किल पुष्पमालाम् ।
यात्रां विधाय स्वपुरं गतस्य
जयश्रियं धार्मिकचक्रिणोऽस्य ॥२५७॥
बन्धुः स्वबन्धुं जनकः स्वजातं
मित्रं स्वमित्रं जनकः सगोत्रम् ।
पौरा *अभूतांऽबकतोषपोषा-
स्तनुं तनौ क्षेप्तुमिवालिलिङ्गुः ॥ २५८ ॥
स्वस्वस्वजनजनानां कण्ठेषु निवेशयन्ति सुममालाः ।
तीर्थागतानिति जनास्तान् पूज्यान् पूजयन्तीव ॥२५९॥
अखण्डमण्डकैश्[1]चण्डवासितैर्मोदकान्वितैः ।
आगन्तून् भोजयन्ति स्म स्वानीतैर्भोजनैर्जनाः ॥२६०॥
प्रायः स कोऽपि नगरे समभून्न पौरो
विड्-विप्र-शूद्र-यवनप्रमुखो ह्यमुत्र ।
यो देसलस्य समरस्य गुणैर्निबद्धो ।
बद्धाग्रहस्तदपि नैव समाजगाम ॥ २६१ ॥

---

* तोषश्च पोषश्च तोषपोषौ, न भूतौ अंबकयोः-नेत्रयोः तोषपोषौ येषां ते अभूतांऽबकतोषपोषाः-अतृप्तनेत्रा इत्यर्थः।

१ चंडानि-संस्कारकद्रव्याणि ( मसाला इति भाषायाम् )

संघाधिपोऽपि प्रत्येकं प्रत्येकं देसलः समरः।
ताम्बूलवसनाद्यैस्तान् सगौरवममानयत् ॥२६२॥

शुभे मुहूर्तेऽथ पुरप्रवेशं
विधातुमाधत्त समुद्यमं सः।
विधाय शृङ्गारमशेषलोकः
संघस्य संघेश्वरमन्वियाय ॥२६३॥

अश्वादिरूढैः समरादिसंघ-
सुरैर्नरैः संघपुरःस्सरैः स.।
संशोभितः खानसुखासनस्थः
संघाधिपः पत्तनमन्वचालीत् ॥ २६४ ॥

श्रीसिद्धसूरिप्रमुखैर्मुनीशै-
रुपासकैश्चापि परीतपार्श्वः।
देवालयश्चामरधारिणीभि-
र्विधूयमानेषु सुचामरेषु ॥ २६५ ॥

मृदङ्ग-भेरी-पटहादिवाद्यै-
र्नदद्भिरापूरितदिग्विभागः।
श्रीपत्तने कर्तुमनाः प्रवेशं
चचाल तालाचरक्लृप्तवृत्तः ॥ २६६ ॥ ( युग्मम् )

निशम्य संघाधिपदेसलं तं
समापतन्तं जनता समस्ता।
मुदाऽन्विता सर्वगृहेषु हट्ट-
मार्गे समरं वीक्षितुमेकतोऽभूत् ॥ २६७ ॥

गृहे गृहे कुंकुमगुंहलीभि·
पुरः स्फुरद्वन्दनमालिकाभिः।
संशोभितं पूजितपूर्णकुम्भै-
श्चक्रे जनस्तत्पुरमुत्पताकम् ॥ २६८ ॥

क्षमोद्वहो(द्भवो)द्भासितपार्श्वदेशः
श्रीमत्सुमित्राङ्गजसंयुतो च(ऽथ) ।
आ(अ)रावणप्रीतिकरोऽभिरामो
विवेश साकेत इव स्मरोऽसौ ॥ २६९ ॥

तत्पृष्ठगः संघपतिः स देवा-
लयेन सार्द्धं गुरुदर्शनेन ।
पुरं विशन् पत्तनमत्तनेत्रा-
वर्गात(वर्गैः कृत?)न्युञ्छनकश्चचाल ॥ २७० ॥

आकर्णयन् कर्णसुखाः सकर्ण-
कृताश्च यात्राकरणप्रशंसाः ।
स मङ्गलानि प्रविवेश गृह्णन्
क्रमान्निजावासमुपाजगाम ॥ २७१ ॥

प्रदीप-दूर्वा-क्षत-चन्दनाद्यं
स्थाले निधायाशु सुवासिनीभिः
श्रीदेसलस्य स्मरसंयुतस्या-
लिकेऽक्षताढ्यं तिलकं चकार (च चक्रे?)॥२७२॥

अथ प्रवृत्ते कलगीतमङ्गले
जयारवे बन्दिजनस्य जाग्रति ।
पश्चापि चित्ते परमेष्ठिनः स्मर-
न्नलश्चकार स्वगृहं स देसलः ॥ २७३ ॥

गृहदेवालये देवालयादुत्तारितं जिनम् ।
प्रथमं स्थापयामास देसलः सकपर्द्दिनम् ॥२७४॥
अथासनसमासीनः पौरलोकैः सनन्दनः ।
कृतन्युञ्छनकैः साश्रुराशीःपूर्वमवन्द्यत ॥२७५॥
स्मरोऽपि पौरवर्गं तं वस्त्र-ताम्बूलदानतः ।
कृतार्थं मन्यमानः स्वं ससन्मानममानयत् ॥२७६॥

बन्दिनो गायनान् विप्रान् याचकानपरानपि ।
आशीर्वचनवाचालानखिलानप्यतोषयत् ॥२७७॥
ततः सहजपालाद्यास्तनया विनयान्विताः ।
क्षीरेण क्षालयामासुः क्रमादात्मपितुः पदौ ॥२७८॥
तृतीये दिवसे देवभोज्यं साधुरकारयत् ।
तत्रेच्छाभक्तपानाद्यैः साधवः प्रतिलाभिताः ॥२७९॥
पौरपञ्चसहस्राणि तत्राभुञ्जत भक्तितः ।
अवारितसत्रागारे लोकसंख्या न विद्यते ॥२८०॥
सप्तविंशतिलक्षाणि सहस्राणि च सप्ततिम् ।
तीर्थोद्धारे व्ययति स्म देसलः संघनायकः ॥२८१॥
कृतकृत्यं मन्यमानः स्वं संघ[घाधि]पतिदेसलः ।
धर्मैकर्मरतो नित्यं गृहकार्योद्यतोऽभवत् ॥२८२॥
समरोऽपि राजसन्मानसंवर्द्धितमहोन्नतिः ।
परोपकारसाराणि वासराण्यत्यवाहयत् ॥२८३॥
पञ्चसप्ततिसंख्येऽब्दे देसलः पुनरप्यथ ।
सप्तभि· संघपतिभिरन्वितो गुरुभिः सह ॥ २८४ ॥
महातीर्थेषु सर्वेषु सहस्रद्धितयेन सः ।
सार्धं याति करोति स्म द्वियात्रामेष पूर्ववत् ॥ २८५ ॥
व्ययितास्तत्र यात्रायां लक्षा एकादशाधिकाः ।
द्विवल्लक्यद्रम्ममस्तकाः स्वयं देसलसाधुना ॥२८६॥
तदा सुराष्ट्रादेशेषु म्लेच्छबद्धं समरोऽखिलम् ।
जनं विमोच्य जीमूतवाहनोऽभवदुच्चकैः ॥२८७॥
श्रीसिद्धसूरयः स्वायुर्ज्ञात्वा मासत्रयावधि ।
देसलं प्रोचिरे साधो ! तवाप्यस्त्येकमासिकम् ॥२८८॥
तदूकेशपुरे गत्वा कक्कसूरिमहं स्वयम् ।
चतुष्किकायां मुख्यायां स्थापयिष्ये समाधिना ॥२८९॥

भवतामपि चेदिच्छा तच्छीघ्रं चलताधुना ।
देवतानिर्मितो वीरो यत्रास्ते तीर्थमुत्तमम् ॥२९०॥
तत समग्रसामग्रीं कृत्वा श्रीसिद्धसूरयः ।
चेलुर्मेलितसंघेन सार्धं देसलसाधुना ॥२९१॥
गच्छन्नेव पथि स्वर्गरामाभिर्देसलो युतः ।
पुण्यवानिति सोत्कण्ठचित्ताभिरिव संवृतः ॥२९२॥
माघमासपूर्णिमायां पूर्णायां सिद्धसूरयः ।
मुख्यस्थाने कक्कसूरिं स्वहस्तेन न्यवेशयन् ॥२९३॥
एकस्योपाध्यायपदं वाचनाचार्यतां द्वयो. ।
मुनिरत्न-श्रीकुमार-सोमेन्दूनां क्रमाद्ददुः ॥२९४॥
देसलस्य सुतस्तत्र वीरस्नात्रं यथाविधि ।
सहजः कारयामास गोत्राष्टादशकान्वितः ॥२९५॥
तत्रावारितसत्रादि सूरिभ्यः प्रतिलाभनाम् ।
साधर्मिकवात्सल्यमुत्साहात् कुरुते स्म सः ॥२९६॥
विधायाष्टाहिकां तत्र सूरयः फलवर्धिकाम् ।
सहजेन समं जग्मुः श्रीपार्श्वस्तत्र वन्दितः ॥२९७॥
विधाय यात्रां व्यावृत्ता अविच्छिन्नप्रयाणकैः ।
श्रीपत्तनपुरं प्राप्ताः ससंघाः सिद्धसूरय ॥२९८॥
अथ मासावशेषे स्वायुषि श्रीसिद्धसूरय ।
कक्कसूरिं प्राहुरायुर्मासमात्रमितो मम ॥२९९॥
अहोभिरवशिष्टैस्तैरष्टभिस्तदहो मम ।
अनाशकं प्रदातव्यं संघक्षामणपूर्वकम् ॥३००॥
किमिदानीं कलौ ज्ञानं भवेदिति विचिन्त्य ते ।
न तत् प्रोक्तेऽपि दिने कक्कसूरयोऽनशनं ददुः ॥३०१॥
गुरवोऽपि स्वयमेवोपवासद्वितयं व्यधुः ।
संघप्रत्यक्षमक्षेपात्ततो ददुरनाशकम् ॥ ३०२ ॥

सहजप्रमुखाः सर्वे श्रावका भक्तिभावुकाः
महोत्सवं विदधिरे स्पर्द्धमानाः परस्परम् ॥३०३॥
चातुवर्णोऽपि यो लोको नगरे निवसन्नभूत् ।
बालो युवाऽपि वृद्धोऽपि वन्दनाय स आगतः ॥३०४॥
पञ्चभिर्योजनैरर्वाग् ग्रामाः केचन सन्ति ये ।
तेभ्योऽपि नास्ति स प्रायो यो नन्तुं नागतो जनः॥३०५॥
षड्भिर्दिनैर्यथोक्तायां वेलायामेव सूरयः ।
समाधिना नमस्कारोच्चारिणः स्वर्भुवं ययुः॥३०६॥
स्वयं यथोक्तवेलायां मिलितैर्नागरैर्मिथः ।
प्रोक्तं किमिति न ज्ञानं प्रोच्यते साम्प्रतं बुधैः॥३०७॥
ज्ञानं विना कथमिव ज्ञायते तादृशं स्फुटम् ।
जीवितं मरणं वाऽपि तदद्यापि हि विद्यते ॥३०८॥
इति प्रशंसामुखरैर्नागरैरुत्सवस्तदा ।
प्रमदात् कर्तुमारेभे देवैस्तीर्थपतेरिव ॥३०९॥
षड्भिरेव दिनैर्जात एकविंशतिमण्डपे ।
विमाने मुनयः सूरिशरीरं स्वर्चितं न्यधुः ॥३१०॥
स्त्रीणां हल्लीसकैः स्थाने स्थाने लकुटराशकैः
प्रेक्षणकैर्जायमानैर्वादित्रैश्च पुरस्सरैः ॥३११॥
सूरिर्विमानसंस्थोऽसौ प्रत्यक्ष इव निर्जरः।
स्वर्गलोकं यातुकामो निस्ससार पुरात्ततः ॥३१२॥
ततोऽहमहमिकया श्रावकैः स्कन्धदायिभिः ।
क्रोशं विमानं तन्निन्ये दर्शने वलिते सति ॥३१३॥
चन्दना-गरुकाष्ठौघैः कर्पूरैश्चैव केवलैः।
पूज्यानां देहदाहोऽभूदन्यकाष्ठकथाऽपि न ॥३१४॥
षट्सप्ततिसंयुतेषु त्रयोदशशतेष्वथ ।
चैत्रशुद्धचतुर्दश्यां सूरयः स्वर्भुवं ययुः ॥३१५॥

स्वर्गभूमिं प्रपन्नेषु प्रभुश्रीसिद्धसूरिषु ।
श्रीकक्कसूरयो गच्छं साम्प्रतं पालयन्त्यमी ॥३१६॥
तदानीं सार्वभू(भौ)मः श्रीकुतवदीनाम्ना नृपः ।
साधुस्मरगुणान् श्रुत्वा जज्ञे तद्दर्शनोत्सुक. ॥३१७॥
संप्रेष्य स स्फुरन्मानं स्मरसाधुमथाह्वयत् ।
विधाय सोऽपि सामग्रीं प्राचलच्छिथिलोपरि ॥३१८॥
तत्र संप्राप्त एवायं श्रीसुरत्राणभूभुजा ।
सगौरवं समाहूय समरो निरवर्ण्यत ॥ ३१९ ॥
विविधान्युपायनानि मुक्त्वा भूपपुरः स्मरः ।
नमन् भुवि लुठन् राज्ञा सोत्कण्ठं ददृशे दृशा ॥३२०॥
सन्तुष्टः श्रीसुरत्राणः समराय स्वयं ददौ ।
सप्रसादं सर्वदेशव्यवहारिषु मुख्यताम् ॥३२१॥
तत्र स्थितस्याभिनवाभिनवैः स्वामिनिर्मितैः ।
प्रसादैः प्रमुदस्तस्य ययौ कालः कियानपि ॥३२२॥
दानवीरो गायनस्य समरः पारितोषिके ।
ददौ सहस्रं टङ्कानामेकस्मिन् ध्रा(ध्रु)वके कृते ॥३२३॥
श्रीमत्कुतबदीनस्य राज्यलक्ष्म्या विशेषकः ।
ग्यासदीनाभिधस्तत्र पातसाहिस्तदाऽभवत् ॥३२४॥
तेनातीव प्रमोदेन स्मरसाधुः सगौरवम् ।
सन्मान्य खानवद्यं पुत्रत्वे प्रत्यपद्यत ॥३२५॥
तत्रासौ श्रीसुरत्राणबन्दिबद्धं स्मर. सुधीः ।
पाण्डुदेशेश्वरं वीरवल्लभाभिधभूभुजम् ॥३२६॥
मोचयित्वा प्रभोर्भूयः स्वदेशे संव्यधाप्यत ।
राजसंस्थापनाचार्यबिरुदं समुपार्जयत् ॥३२७॥
पातसाहिस्फुरन्मानाद्धर्मवीरः स्मरस्तथा ।
मथुरायां हस्तिनागपुरे +जै(जि)नजनिक्षितौ ॥३२८॥

---

+ जिनस्य–श्रीनेमिनाथस्य जनिक्षितौ–जन्मभूमौ

बहुभिः संघपुरुषैः श्रीजिनप्रभसूरिभिः ।
समन्वितस्तीर्थयात्रां चक्रे संघपतिर्भवन् ॥३२९॥[युग्मम्]
अथो तिलङ्गविषये ग्यासदीनसुतं स्मरः ।
आशिश्रयदुल्लखानं प्राप्तमानं सदा पितुः ॥३३०॥
खानेनापि प्रपेदेऽथ भ्रातेति समरो मम ।
विश्वासपात्रं तदाऽसौ तिलङ्गाधिपतिः कृतः॥३३१॥
तत्रैकादश लक्षाणि मानवानामपापधीः ।
तुरुष्कबन्दिबद्धानाममोचयदयं स्मरः ॥३३२॥
अनेकेषां भूपतीनां राणकानामपि स्मरः ।
व्यवहारिणामप्येष उपचक्रे च भूरिशः ॥३३३॥
श्रावकानपि सर्वेभ्यो देशेभ्यः समुपागतान् ।
सकुटुम्बान् स्थापयित्वा तिलङ्गविषये स्मरः ॥३३४॥
उरंगलाभिधपुरे कारयित्वा जिनालयान् ।
जैनशासनसाम्राज्यमेकच्छत्रमकारयत् ॥३३५॥
तिलंगविभुतां प्राप्य परनारीसहोदरः ।
सर्वोपकारकारी स द्योतयामास पूर्वजान् ॥३३६॥
जन्मप्रभृति यो नित्यमुदितोदितभाग्यभाक् ।
बभूव समरश्चक्रवर्तीव जिनशासने ॥३३७॥
विश्वप्रीतिकरत्वेन केषां चेतस्सु नास्पदम् ।
स चकार महासारः स्मरः स्मर इवावनौ ॥३३८॥
नीत्या येन तिलङ्गदेशमवता श्रीरामचन्द्रायितं
दानं चाप्रतिमं सदैव ददता पात्रेषु कर्णायितम् ।
जीवानामभिरक्षणं विदधता जीमूतपात्रायितम्
तं साधुं भरतेश्वरप्रतिनिधिं कः स्तोतुमीशः स्मरम्॥३३९
कलावपि कृतयुगावतारं समरः क्षितौ ।
विधाय स ययौ स्वर्गं तत्रापि तच्चिकीर्षया ॥३४०॥

